शय:। वाग्गद्गदा द्रवते यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च। विलज्जउद्गायति नृत्यते च मद्भक्तियुक्तोभुवनं पुनाति। वराहपुराणे, सम्भृत: कीर्त्तितोवापि दृष्ट: स्पृष्टोऽथवा प्रिये। पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया। एतज्ज्ञात्वा तु विद्वद्भि: पूजनीयोजनार्द्दन:। वेदोक्तविधिना भद्रे आगमोक्तेन वा सुधी:। सुधीरिति पृथिवीसम्बोधनं। तथा, यावत् सर्व्वेषु भूतेषु मद्भावोनोपजायते। तावदेवमुपासीत वाङ्मन:कायकर्म्मभि:। हरिवंशे बलिं प्रति भगवद्वाक्यं, पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा। तत्सर्व्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति। बचाङ्गिरसौ। सर्व्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतं। पुनस्तपस्वी भवति पंक्तिपावनपावन:। गारुड़े, यद्दुर्लभं यदप्राप्यं मनसोयन्न गोचरं। तदप्यप्रार्थितं ध्यातोददाति मधुसूदन:। विष्णुपुराणे, ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवं। योगियाज्ञवल्क्य:, ध्यात्वा प्रणवपूर्व्वन्तु दैवतन्तु समाहित:। नमस्कारेण पुष्पादि विन्यसेत्तुपृथक् पृथक्। आग्नेये, तल्लिङ्गै: पूजयेन्मन्त्रै: सर्व्वदेवान् समाहित:। ध्यात्वा प्रणवपूर्व्वन्तु तन्नाम्ना सुसमाहित:। नमस्कारेण पुष्पादि विन्यसेत्तु पृथक् पृथक्। मन्त्रतन्त्रप्रकाशे मन्त्र-

---

ॐ नमो नारायणायेत्यादि मन्त्रादौ यन्नम पदं तन्न त्यागार्थकं किन्तु न्त्यर्थक मतस्तदन्तेनमपदं देयमेव। होमस्थले त्यागार्थकतया स्वाहापदस्यानुशिष्टत्वान्नमोऽन्ते तत्र स्वाहापदं नतु स्वाहान्ते

मधिकृत्य। नमोऽन्ते न नमोदद्यात् स्वाहान्ते ठिठमेव च। पूजायामाहुतौ चैव सर्व्वत्रायं विधिः स्मृतः। ठिठः स्वाहा। स्मृतिः, पत्रत्रयान्विता दूर्व्वा प्रशस्ता चार्घकर्म्मणि (७६)।

कालिकापुराणे, यद्दीयते च देवेभ्यो गन्धपुष्पादिकं तथा। अर्घपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्। विष्णुधर्म्मोत्तरे, चन्दनागुरुकर्पूरमृगसारांस्तथैव च। जातीफल तथा दद्यादनुलेपनकारणात्। अतोन्यन्नैव दातव्यं सुगन्धिद्विदेवानुलेपनं। विष्णुधर्म्मोत्तराग्निपुराणयोः। सुगन्धैश्च सुरामांसीकर्पूरागुरुचन्दनैः। तथान्यैश्च शुभैर्द्रव्यैरर्च्चयेज्जगतीपतिं। कालिकापुराणे, यद्यपि देव्याद्युपक्रम्य नैवेद्यादौ दिङ्नियमउक्तस्तथाप्याकाङ्क्षया अन्यत्राप्यन्वेति। यथा, नैवेद्य दक्षिणे वामे पुरतोऽपि न पृष्ठतः। दीपं दक्षिणतोदद्यात् पुरतोऽपि न वामतः। वामतस्तु तथा धूपमग्रे वा नतु दक्षिणे। निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणं। दीपञ्च तथा स्थापयेत्

तद्देयमित्यभिप्रायेणाह स्वाहान्ते ठिठमेवचेति यत्र च मन्त्रे चतुर्थ्यन्तनाम नास्ति तत्रवान्तस्थत्यागार्थकनमः स्वाहादिपदमभिव्याहारवशात्कल्पस्य सम्प्रदानतापरत्वमुन्नेयमिति (७६)।

मृगसारं कस्तूरीं। ततोऽन्यदिति विहितेतरदित्यर्थः। तथाच यादित्यत्र तथान्यैश्चेन विहितान्तरस्यानुकर्षात्, अन्यथा वचनान्तरविरोधापत्तेरिति। सुरागन्धद्रव्यविशेष। मासी जटामांसी दक्षिण वाम इत्यत्र व्यवस्थामाह तन्त्रसारे। पक्वञ्च वामतोदद्यादामञ्चैव दक्षिण इति। तथा दीप दत्ते घृताक्तञ्च तैलयुक्तञ्च वामत। दक्षिणे च घृतावर्त्ति वामतोवर्त्तिका। तुलसीचन्दनं तुलसीकाष्ठगन्ध। गारुडे,

यथाच्छयां नाशयेत्। निभीतकार्ककारञ्जस्त्हीच्छायां नचाश्रयेत्। सर्व्वदीपमनुष्याणामन्येषां प्राणिनान्तथा। इति प्रयोगसारात्। सवत्सरप्रदीपे, योहि भागवतोभूत्वा कलौ तुलसीचन्दन। न चार्च्चयति वै विष्णौ न स भागवतोनरः। आग्नेये, चन्दनागुरुकर्पूरकुङ्कुमोशीर पद्मकैः। अनुलिप्तोहरिर्भक्त्या वरान् भोगान् प्रयच्छति। कालेयकं तुरुष्कञ्च रक्तचन्दनमेवच। नृणां भवन्ति दत्तानि पुण्यानि पुरुषोत्तमे। विष्णुधर्म्मोत्तरे, अनुलिप्त जगन्नाथं तालवृन्तेन वीजयेत्। वायुलोकमवाप्नोति पुरुषस्तेन कर्म्मणा। चामरैर्वीजयेद्यस्तु देवदेवं जनार्द्दनं। तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयं। रविनभट्टधृत, भद्रपात्रस्थितं गन्धं मन्त्रैर्द्दद्यात् कनिष्ठया। कनिष्ठाङ्गुष्ठसयुक्ता गन्धमुद्रा प्रकीर्त्तिता। नारसिंहे, अपर्य्युषितनिश्छिद्रैः प्रोक्षितै र्जन्तुवर्जितैः। आत्मारामोद्भवैर्व्वापि पुष्पैः संपूजयेद्धरिं। देवीपुराणं, स्वयं पतितपुष्पाणि त्यजेदुपहतानि च।

योददाति हरेर्नित्य तुलसीकाष्ठचन्दन। युगानि वसते स्वर्गे ह्यनन्तानि नरोत्तम, इति, यद्वा तुलस्या सह चन्दन। उशीर गन्धवीरणमूल। पद्मकं पद्मकाष्ठ कालेयक कृष्णागुरु, तुरुस्क शिलारसइतिख्यात। रक्तचन्दन कुङ्कुम वीरलोहितचन्दन मित्यमरात्। द्राविड़पद्मक दृष्टा होभाव्य रक्तचन्दन। उशीर चित्तविभ्रममन्येतुर्च्चूरुपद्रवमिति विष्णु धर्म्मोत्तरवचने पद्मकाष्ठादिनिषेधादत्रपद्मकाष्ठादिविधान सम्वलितत्वेन बोध्य, अन्यवचनान्तरनिषिद्ध। कनिष्ठयेति, अङ्गुष्ठसयुक्तयेत्यर्थं तया विधायाएव गन्धमुद्रात्वात्। अपर्य्युषितैर्निश्छिद्रैश्च आत्मारामोद्भवै स्वकीयारामोद्भवे। वापोलवत्त चापात्र उपहतानि, दूपितानि

शातातपः, शिवे विवर्जयेत् कुन्दं उन्मत्तञ्च हरौ तथा। देवीनामर्कमन्दारौ सूर्य्यस्य तगरन्तथा। विष्णुधर्म्मोत्तरे, धर्म्मार्जितधनक्रीतैर्य्यः कुर्य्यात् केशवार्च्चनं। उद्धरिष्यत्यसन्दिग्धं दशपूर्व्वान् दशावरान्। नारसिंहे, मल्लिकामालतीजातीकेतकाशोकचम्पकैः। पुन्नागनागबकुलैः पद्मैरुत्पलजातिभिः। तुलसीकरवीरैश्च पलाशावन्तिकुब्जकैः। एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः। अर्च्चन्दश सुवर्णस्य प्रत्येकं फलमाप्नुयात्। पुन्नागः पुनाग इति मिथिलायां प्रसिद्धः, नागो नागकेशरः। नारदीयसप्तसाहस्रे, मालतीबकुलाशोकाशेफालीनवमालिका। अम्लानतगराह्वोठमल्लिकामधुपिण्डिका। यूथिकाष्टापदं कुन्दं कदम्बं मधुपिङ्गलं। पाटलाचम्पकं कृष्णं लवङ्गमतिमुक्तकं। केतकं कुरुवकं विल्वं कह्लारं करकं द्विजः। पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे। कुरुवकं रक्तझिण्टिका। यत्तु, सुरभीणि तथान्यानि वर्जयित्वा च धीतकीमितिवामनपुराणवाक्यं तन्नरसिंहेतरावतारविषयं। केतकीपत्रपुष्पञ्च भृङ्गराजस्य पत्रकं तुलसीकृष्णतुलसी

अ ह्वोठश्चाकन्दादीतिख्यात, मधुपिण्डिका मधूक, अतिमुक्तक माधवीलता। कृष्णापराजिताचैव जयन्ती गिरिमालिनीपदेनात्र श्वेतापराजिता। कृष्णापराजिताचैव जयन्ती हरति तथा।' यो दद्यादिप्यर्थे तस्मै द्रुतं विष्णुः प्रयच्छतीति, 'हरिपरामोदधृतनारदवचनेन कृष्णापराजिता निषेधात्। धीतकं धीयुली तिख्यात करवीरञ्चेति हरिभक्तिविलासः। न ग्राह्यं करवीरस्य कुसुमं रविसैन्धवदिवि। पतितैर्मुकुलैर्म्लानैः नामैर्वा न्तुदूषितैः। आघ्रातैरङ्गसंस्पृष्टैरवि।

सद्यस्तुष्टिकरं हरेरिति नरसिंहपुराणात्। वामनपुराणे, पारिभद्रं पाटला च वकुलं गिरिशालिनी। तिलकं जम्बुवनजं पीतकं तगरन्तुभि। एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने। गिरिशालिनी अपराजिता। जम्बुवनजं श्वेतजवापुष्पं, विष्णुधर्म्मोत्तरे, रक्ताशोकश्च कुसुममतसी कुसुमन्तथा। अतसीशणः। तथा, चम्पकसा च देयानि तथा भूचम्पकसा च। आग्नेये, पद्मान्यम्बुसमुत्थानि रक्तनीले तथोत्पले। सीतोत्पलञ्च कृष्णश्च दयितानि सदा हरेः। तथा, पाटला करवीरञ्च जवा जयन्तिरेव च। कुब्जकस्तगरश्चम्पः कर्णिकारः कुरुण्टकः। चम्पश्चम्पककुसुमं। अत्र विशेषोमत्स्यतन्त्रे, गोपाले वर्जयेज्झिण्टिं वकचम्पक वासकमिति। अवचम्पकं कनकचम्पकं। तथाच स्कन्दपुराणे, जवा कुरुण्टकं वर्ज्यं वकं कनकचम्पकं। विवर्णं क्रमिसन्दष्टं न देयं भजताच्युतं। जवा रक्तजवा, कुरुण्टकं पीतझिण्टिकं। भविष्ये, पद्मानि सितरक्तानि कुमुदान्युत्पलानि च। एषां पर्य्युषिताशङ्का कार्य्या पञ्चदिनोत्तरे। तुलस्यगस्त्यविल्वानां नास्तिपर्य्युषितात्मता। अगस्त्या वकं। योगिनीतन्त्रे, विल्वपत्रञ्च माध्यञ्च तमालामलकीदलं। कह्लार तुलसी

ष्टैर्दूषितैर्यैव नार्च्चयेदित्यत्र करवीरस्तैरिति न करवीरपुष्पपरं नाना वचनेषु तस्य विहितत्वात् किन्तु करवीरपत्रादिस्थकुसुमपरमिति न विरोधः। हरिभक्ति विलासटीकायान्तु यन्मुक्तं करवीरञ्च न गृहे रोपयेत् क्वचिदिति ज्योतिर्वचने गृहेकरवीरारोपणनिषेधात् गृहेरोपितकरवीर

चैव पद्मञ्च सुनिपुष्पकं। एतत् पर्य्युषितं न स्यात् यदा-न्यत् कलिकात्मकं कलिकात्मकं स्फुटः प्रस्फोटनयोग्यं। राघवभट्टधृतं कलिकाभिस्तथा नित्यं विना चम्पक-पङ्कजैः। शुष्कै र्न पूजयेद्विष्णुं पत्रैः पुष्पैः फलैरपि। विष्णु-धर्म्मोत्तरे, उग्रगन्धीन्य गन्धीनि कुसुमानि न दापयेत्। अन्यायतनजातानि कण्टकानि तथैव च। रक्तानि यानि धर्मज्ञ चैत्यद्रुमोद्भवानि च। यानि श्मशानजातानि यानि चाकालजानि च। तथा, कुटजं शाल्मली-पुष्पं शिरीषञ्च जनार्द्दने। निर्द्दत्तं भयं रोगं निः-स्वत्वञ्च प्रयच्छति। वन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत्। अनुक्तरक्तकुसुमदानाद्दौर्भाग्यमाप्नुयात्। आगमे, परारोपितवृक्षेभ्यः पुष्पमानीय योऽर्च्चयेत् अविज्ञाप्य च तस्यैव निष्फलं तस्य पूजनं। एतद्दि-जेतरपरं। द्विजः स्तृणैधः पुष्पाणि सर्व्वतः स्ववदाहरे-दिति याज्ञवल्क्यात्। देवतार्थन्तु कुसुमस्तेयं मनुर-ब्रवीदिति वचनाच्च। गोऽग्न्यर्थंतृणमेधांसि वीरुद्वन स्पतीनां पुष्पाणि स्ववदादीत फलानि चापरिवृत्तानामिति गौतमवचनाच्च विशेषोज्ञेयः। द्विजेतरस्य दण्डोऽपि। तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलं।

---

पर्य्येण हरिपूजनं न कार्य्यमित्युक्तं। योगिनीतन्त्रे विष्णुरन्त्यकादित्य नीलकण्ठं मयूरस्य योन्याकारञ्च वर्ज्जयेत्। शेफालिकाञ्च कह्लारं शरत्-काले प्रशस्यते। अन्यत्र नसृजेदेवि प्रार्थयित्वोच पूजनात्। रक्त-हैमन्तिकं वर्ज्यं रक्तकृष्णञ्च वर्ज्जयेत्। बन्धूकं करवीरस्य वकुलस्य गौरजस्यच। रक्तान्येतानि देयानि द्रोणस्य-केशरस्य कदम्बस्य तथा कोकनदस्यच।

अप्रयच्छन्निएकानीदकच्छेदनमर्हति, इति स्मृतेः देवोपरिधृतं मस्तकोपरिधृतमधोवस्त्रधृतमन्तर्जलप्रक्षालितञ्च पुष्पं दुष्टमिति हरिभक्तिनामक ग्रन्थे (११)।

अभिवाद्याभिवादकाकारस्थपुष्पस्य प्रोक्षणात् कर्मण्यमिति केचित्। अतएव तयोरभिवादननिषेधमाह बौधायनः, समिदार्थ्यदकुम्भपुष्पान्नहस्तोनाभिवादयेदयच्चान्यैव युक्तमिति। एव युक्तं समिधादियुक्तं। लघुहारीतः, जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान्। दन्तकाष्ठञ्च भैक्षञ्च वहन्तं नाभिवादयेत्। अभिवादयेदित्यनुवृत्तौ शङ्खलिखितौ, न पुष्पाक्षतपाणिनाशुचि र्न जपन्न देवपितृकार्य्यं कुर्व्वन्निति, अक्षतायवाः, अक्षतास्तु यवाः प्रोक्ताभृष्टाधानाभवन्ति ते। इति भट्टनारायणधृतं।

ज्ञनऋस्यचेति। अत्र द्रोणस्य योन्याकारत्वेऽपि विशेषेण ग्रहणात् ग्राह्यता, तथा श्वेतादराजिता अपि ग्राह्यता विशेषाभिधानादिति।: जयन्तिरधचः इत्यत्र जयन्तीग्रहणं श्वेतजयन्तीलाभाय। हरिहरामोदृतवचने च कृष्णापराजितासाहचर्य्यात् जयन्तिपदं कृष्णजयन्तीपरमिति। नास्तिपर्य्युपितात्मतेति अत्र हरिहरामोदे, मालाकारगृहस्थानि न स्युः पर्य्युपितान्यपोति। ओदत्तोऽपि, मालाकारगृहस्थकुसुमस्य पर्य्युषितत्वदोषोनास्तीत्याह। तथा हरिहरामोदधृतमतस्यसूक्ते। तुलस्यागस्त्यपुष्पाणि पद्म गङ्गाजलकुम्भ। न पर्य्युपितदोषोऽस्त छिन्नभिन्नं न दूष्यतोति। अन्यायतनजातानीति द्विजेतरपरं वक्ष्यमाणवचनात्। अएकोनि सकण्टकानि। अत्र पुष्पाक्षताञ्जलिभिर्दद्याचिपिडान्यपि मालयति हरिहरामोदधृतोदः चाह स्वयं आत्मोग्रवत् प्रपद्दितानां अधातविजानामस्यामिकानामितियावत् (११)।

ते यवा भृष्टा धाना भवन्तोत्यत्र धानाशब्दस्य भृष्टयववाचित्वप्रदर्शनेन भट्टनारायणोक्तवचने अक्षतास्तु दवात्वात्र दवाद्दस्य तौहिद्विघ

अतएवामरसिंहः धानाभृष्टयवे स्त्रियः । आपस्तम्बः, समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकः । जपं होमञ्च कुर्व्वाणं नाभिवादयेत वै द्विजं । विप्रागमने तु वशिष्ठः, जपकाले न भाषेत व्रतहोमादिकेषु च । एतेषु चैवायुक्तस्तु यद्यागच्छेद्द्विजोत्तमः । अभिवाद्य ततोविप्रं योगक्षेमञ्च कीर्त्तयेत् । अत्र द्विजोत्तमपदं निषादस्थपतिवत् कर्म्मधारयसमासस्यैव युक्तत्वादपतितत्रैवर्णिकपरमिति विद्याकरः, वस्तुतस्तु विप्रपदश्रवणात्तन्मात्रपरं । याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलमिति वदन्ति । तथा, न पुष्पच्छेदनं कुर्य्याद्देवार्थं वामहस्ततः । न दद्यात्तानि देवेभ्यः संस्थाप्य वामहस्ततः । हारीतशातातपौ, समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् पतत्यधः । क्रये प्रतिप्रसूते ब्रह्मपुराणं, पुष्पैर्धूपैश्च नैवेद्यैर्वीरक्रयक्रियाहृतैः, · वीरक्रयः वीरवत् याच्ञाशून्येन विक्रेतुरुप-

---

परतां द्द्यति । अतएवेति निषादस्थपतिर्वदिति, अनयैव स्वया निषादस्थपतिं याजयेदितिश्रुतौ निषादस्य चाण्डालस्थपतिरीश्वर इति षष्ठीतत्पुरुषे निषादसम्बन्धेलक्षणापत्त्या निषादश्चासौस्थपतिश्चेति कर्म्मधारय एवादियतइति मीमांसासिद्धान्तसिद्धं दृष्टान्तितं, अवयविद्याकरमते उत्तमपदमपतितस्वधर्म्मनिष्ठपरं एवञ्चयद्यागच्छेत् द्विजोत्तमइत्यन्तरं तदा तमिति पूरणीयं तस्ययोगक्षेमं कीर्त्तयेत् पृच्छेदित्यर्थेनान्वयः । यदि च तेषु मध्येऽभिवाद्योविप्र आयाति तं विप्रमभिवाद्य योगक्षेमं पृच्छेदितिवाक्यमिद इतितन्मतमुपेक्ष्य वस्तुतस्त्वति क्षमतमत्र च अतोद्विजोत्तम इत्यस्य विशेष्यपद विप्रमित्यस्यविभक्तिविपरिणामेन विप्रइतिपदं निर्द्धारणस्थलेनिर्द्धारणीयविशेष्यवाचकपदस्यावश्यकत्वात्

न्यस्तमूलत्वेन ग्राह्यः। विष्णुधर्मोत्तरे, भृङ्गराजस्य शिग्रस्य बकपुष्पस्य च द्विजाः। जम्बाम्रबीजपूराणां पत्राणि विनिवेदयेत्। तथा, पुष्पाणि यदि ते न स्युः प्रशस्तैरपि पल्लवैः। दूर्वाङ्कुरैरपि ब्रह्मंस्तत्राविनार्चयाङ्कुरं। वामनपुराणे, विल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकं। तमालामलकीपत्रं शस्तं केशवपूजने। ज्ञानमालायां, पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखं। पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पणं। लघुहारीतः, स्नानं कृत्वा च ये केचित् पुष्पं गृह्णन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत्। एतत्तु द्वितीयस्नानाभिप्रायकमिति रत्नाकरः। व्यक्तं मत्स्यसूक्ते, स्नात्वा मध्याह्नसमये न च्छिन्द्यात् कुसुमं नरः। तत्पुष्पस्यार्च्चने देवि रौरवे परिपच्यते। स्कान्दे, न धात्री सफला यत्र न विष्णोस्तुलसीदलं। तन्मुष्मसदृशं स्थानं यत्र नायान्ति वैष्णवाः, यत्र मातृपरोमर्थी यत्र द्वादशीलङ्घनरः। तुलसी मालती धात्री तत्र विष्णुः श्रिया सह। दूर्वा दहति दुःखानि धात्री।

---

नराणामूरस्त्वाद्यप्रयोगात् नराभिन्नविषयादौ 'नरसामान्यव्याहतशूरत्वादेर्बाधात् निर्द्धारणविभक्तिप्रकृत्यर्थसामान्यव्याहतविधेयबोधकत्वैवाकादितत्वात्।' अन्यथा द्रव्येषु घटोऽन्यथानित्यादिर्यथामापत्ते' घटभिन्नजलादिरूपयत्किञ्चित् द्रव्यव्याहतत्वस्य 'गन्धे सत्त्वात्' विशेषणवाचकपदस्य सत्त्वे च तदर्थनिष्ठनिर्द्धारणविभक्तिप्रकृत्यर्थसामान्यव्याहतत्वस्य निर्द्धारण विभक्त्यावोधनीयत्वेन निरुक्तदोषाभाव। 'एव नराणां राक्षसे. शूरत्वादि प्रयोगवारणाय विशेषवाचकपदाघ निर्द्धारणविभक्तिप्रकृत्यर्थाभेदश्चाऽपव निर्द्धारणविभक्तेः साधुतावाप्येति विशेष्यवाचकपदस्या-

हरति पातकं। हरीतकी हरेद्रोगं तुलसी हरते क्षयं। तुलसीं प्राप्य यो नित्यं न करोति ममार्च्चनं, तस्याहं प्रतिगृह्णामि न पूजां दशवार्षिकीं। अतएव, गृह्णाति तुलसीं शुष्कामपि पर्य्युषितां हरिः। तथा, वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलं, न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलं। तुलसीपत्रमादाय यः करोति ममार्च्चनं। न पुनर्योनिमाप्नोति मुक्तिभागी भवेत्तु सः॥ तथा, समञ्जरिदलैर्युक्तां तुलसीसम्भवैः क्षितौ। कुर्व्वन्ति पूजनं विष्णोस्ते कृतार्थाः कलौ

---

यद्यर्थकमिति। एवञ्च जात्यादिविशेषणविशिष्टे यद्धर्म्मावच्छिन्नाभिन्ने तादृशजात्यादिविशेषणशून्यतद्धर्म्मावच्छिन्नव्यावर्त्तकविधेयभानं तत्र तद्धर्म्मावच्छिन्नवाचकपदोत्तरं षष्ठीसप्तमीवेति निर्धारणसूत्रतात्पर्य्यं। द्विजेषूत्तमो द्विजोत्तमो विप्र इत्यत्र तु सप्तम्याश्चाधारत्वमर्थः आधारत्वं चैदमतियोगिताविच्छेदकत्वनिरूपकत्वोत्तमपदार्थतावच्छेदकोत्तमत्वे व्युत्पत्तिवैचित्र्यात् तदेकदेशे भेदे च विप्राश्रयद्विजत्वव्यापकत्वविशिष्टाधेयतासम्बन्धेन प्रकृत्यर्थद्विजस्यान्वयः। सप्तम्यर्थाधिकरणतोत्तमत्वावच्छिन्नस्य च द्विजत्वविशिष्टतादात्म्यसम्बन्धेन विप्रेऽन्वय इति निष्कृष्टार्थलाभः निरूपकत्वसम्बन्धेन तत्पदार्थान्वयपक्षाकाङ्क्षास्वीकाराच्च आधेयत्वादिसम्बन्धेनान्वयस्वीकारेणातिप्रसङ्गः। द्विजेषु विप्रस्य उत्तमत्वमित्यत्र द्विजनिरूपितत्वविशिष्टाधेयतासम्बन्धेन विप्रस्योत्तमत्वेऽन्वये तादृशवाक्याकाङ्क्षास्वीकारेण नातिप्रसङ्गः। न निर्द्धारणे षष्ठीतिसूत्रेण निर्धारणषष्ठ्या तत्पुरुषसमासनिषेधः स्वरभेदनिषेधाय उत्तमत्वमित्यत्र वेदाध्ययनादिगुणविशेषपरं। नन्वेमादृशगुणविशिष्टस्योत्तमपदार्थत्वे कर्म्मधारय एव कथं न क्रियते क्षत्रियवैश्ययोर्निरुक्तोत्तमत्वविरहेणैव व्यावर्त्तनात्। न च द्विजपदमव्यावर्त्तकं नैषम हीनबद्धेत्यादौ नकारोपचरद्देदन द्विजपदस्य स्वरूपाख्यानरूपत्वादितिवाच्यं विशेषणवाचकोत्तमपदस्य पूर्व्वनिपातापत्तेः। अथवा द्विजेभ्य उत्तम इति पञ्चमीसमासानन्तरं द्विजपदं विप्रनिष्ठद्विजपरं विप्रमित्यनेन-

युगे, स्नाने दाने तथा ध्याने प्राशने केशवार्च्चने। तुलसी दहते पापं कीर्त्तने रोपणे कलौ, तुलस्यमृतनामासि सदा त्वं केशवप्रिये, केशवार्थं चिनोमि त्वां वरदा भव शोभने। गारुड़े, मातस्तुलसि कल्याणि गोविन्दचरणप्रिये। चिनोमि हरिपूजार्थमपराधं क्षमस्व मे। त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिं, तथा कुरु पवित्राङ्गि कलौ मलविनाशिनि। मन्त्रेणानेन यः कुर्य्याद्गृहीत्वा तुलसीदलं। पूजनं वासुदेवस्य लक्षकोटिफलं लभेत्। राघवभट्टधृतं, सद्यः पर्य्युषितं वापि निर्माल्यं नैव दूष्यति। तथान्येन हरेस्तुष्टि-

---

सामान्यशब्दस्य विशेषे तात्पर्य्यमश्वादेवताहयोत्तमत्वस्य विप्रएव पर्य्यवसानात् विप्र इति विशेष्यवाचकपदाकथनादस्य कल्पस्य समीचीनतेति एतदुभयकल्पे उत्तमपद शोभाग्यमक्षद्विजमपेक्ष्योत्कर्षविशेषविशिष्टगुणवत्परं वाच्यं अन्यथाभिवाद्येत्युत्तरग्रन्थासङ्गतेः। एवञ्च तं विप्रमभिवाद्य योगक्षेमं पृच्छेदित्येकमेववाक्यमिति। यथेतिहासः, श्रीभागवतीयाष्टमस्कन्धे। स वै पूर्व्वमभूद्राजा पाण्ड्यो द्रविड़सत्तमः। इन्द्रद्युम्न इतिख्यातो विष्णुव्रतपरायणः। स एकदाराधनकाल आत्मवान् गृहीतमौनव्रतमीश्वरं हरिं। जटाधरस्तापस आप्लुतोऽच्युतं समर्च्चयामास कुलाचलाश्रयः। यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः। तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह। तस्मा इमं शापमदादसाधुरयं दुरात्माकृतबुद्धिरद्य। विप्रावमन्ता विशतां तमिस्रं यथा गजः स्तब्धमतिः स एव। शुक उवाच। एवं शप्त्वागतोऽगस्त्यो भगवान्नृप सानुगः। इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन्। आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीं। हर्य्यर्च्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिरिति। परन्तु केवलकुरयोत्तमपदस्य भगवति हरौ भूरिप्रयोगात्। हरिर्यथैकः

तुलस्या तुष्यते यथा। गरुड़पुराणे, गवामयुतदानेन यत् फलं लभते खग। तुलसीपत्रकैकेन तत्फलं कार्त्तिके स्मृतं। तथा, तुलसीं विना या क्रियते न पूजा स्नानं न तद्यत्तुलसीं विना कृतं। भुक्तं तद्यत्तुलसीविवर्जितं पीतं न तद्यत्तुलसीविवर्जितं। यमाचापि, तुलसीदलसमिश्रं यत्तोयं शिरसा वहेत्। सर्व्वतीर्थाभिषिक्तस्य तेन प्राप्तं फलं ध्रुवं। वैशाखस्मृतौ व्यासः, जलच्छिद्रा भवेद्यावत्तुलसीमूलमृत्तिका। तावत् प्रीणाति भगवान् विश्वात्मा पितृभिः सह। मनः-प्रसादजननी सुखसौभाग्यवर्द्धिनी। आधिव्याधिहरे

पुरुषोत्तमोमत इति कालिदासादिवचनाच्च पुरुषोत्तमपद हरौ रूढं। अवयवशक्त्या पुरुषावधिकोत्तमत्व बोध्यते तेन पुरुषोत्तम कृष्ण इति पुरुषोत्तमशब्दार्थस्तथा द्विजोत्तमपदस्य विप्रएव भूरिप्रयोगात् क्षत्रिय वैश्ययोरप्रयोगाच्च विप्रे रूढिः। एवञ्च द्विजोत्तमशब्देन रूढ्या विप्र उक्त। द्विजशब्देन च शक्त्या द्विजत्वावच्छिन्न उक्तस्तस्य च विप्रेऽभेदान्वय। तथा तेनैव द्विजपदेन लक्षणया विप्रान्यद्विजउक्त। तस्य च लुप्तसप्तम्यर्थे अन्वय। अन्यत्र एकपदे युगपत्शक्तिलक्षणयोरस्वीकारेऽपि निर्द्धारणविभक्तिप्रकृतेर्युगपत्शक्यलक्ष्यार्थबोधेऽनादिव्युत्पत्तिकल्पनात् सप्तम्यर्थभेदस्य उत्तमपदार्थेऽन्वय। उत्तमपदार्थस्य चाभेदसम्बन्धेन विप्रेऽन्वयस्तेन द्विजाभिन्नो विप्रोविप्रान्यद्विजभिन्नोत्तमाभिन्न इति बोध्य। अतएव निर्द्धारणसप्तमीसमाससमभिप्रेत्य बोपदेवै पुरुषोत्तमपद पुरुषेपूत्तम पुरुषोत्तमइत्युक्त। क्वचिदन्यत्र पुरुषोत्तमपदप्रयोग कर्म्मधारयाभिप्रायेण यथा तथा द्विजोत्तमपदस्य कर्म्मधारयाभिप्रायेणैव क्वचित् क्षत्रियवैश्ययोरपि प्रयोग इति प्राहु। वीरक्रयक्रियाहृतैरिति वीरक्रयरूपाक्रियातयाहृतैरित्यर्थं। बिल्वपत्रमिति श्रीकृष्णेतर विषयक न रक्तचन्दनं चातु गङ्गोयादक्तपुष्पक। बिल्वपत्रैस्तक्कुसुमै-

नित्यं तुलसि त्वं नमोऽस्तु ते। इति नमस्कारमन्त्रः। श्रियः श्रिये श्रियावासे नित्यं श्रीधरसत्कृते। भक्त्या दत्तं मया देवि गृहाणार्घ्यं नमोऽस्तु ते। श्रियं देहि यशो देहि कीर्त्तिमायुस्तथा सुखं। बलं पुष्टिं तथा धर्म्मं तुलसि त्वं प्रयच्छ मे। इत्यनेन पूजा (७८)।

विष्णुधर्म्मोत्तरे। पुष्पाभावेऽपि देयानि पत्राणि च जनार्द्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्यते। न रत्नैर्न सुवर्णैश्च न च वित्तेन भूरिणा। तथा प्रसादमायाति यथा पुष्पैर्जनार्द्दनः। ज्ञानमालायां, नार्च्चयेच्च विष्णुं न तुलस्या विनायकं। न दूर्व्वया यजेद्दुर्गां नाम्नातकैर्दिवाकरं। विष्णुधर्म्मोत्तरे, धूपदः सर्व्वमाप्नोति दीपदः सर्व्वमश्नुते। वामनपुराणे। कङ्कोलाख्यं कणं दारु सिह्लकं सागुरुं सितं। गङ्गं

नार्च्चयेदेवकोसुतमित्यागमनिषेधात्। समञ्जरिदलैरिति मञ्जरीसहितपत्रैर्युक्तं कृतं पूजनमित्यर्थः। मदात्मममृतनामासीत्यन्वयः अमृतं मरणं पुनर्म्मरणं यत्र इति मोक्षदनामासीत्यर्थः। मलं पापं तद्दिनाशिनीति। पितृभिः सहेति। पितरोऽपि प्रीताभवन्ति मत्सन्ततिकृततुलसीमूलसेकजातहरितोषिण वयमुद्धृता भवाम इति चित्तोल्लासादितिभावः। पूजेतिकर्त्तव्यता, सनत्कुमारपद्मोत्तरे पद्मे पवेशुमनाते द्वादश्यां वैश्यसत्तम। ब्रह्मादयोऽपि कुर्व्वन्ति तुलसीदलपूजनं। द्वादश्यां ये प्रकुर्व्वन्ति तुलसीदलपूजनं। गङ्गारामे वनेवापि शृणु तेषान्तु यत्फलं। प्रयागस्नाननिरतानां काश्यां प्राणविमोचिनां। यत्फलं कथितं वेदैस्तुलसीपूजनेनतत् (७८)।

नार्च्चयेदिति। एकादशस्कन्धे श्रीधरस्वामिभिर्न्नतुलस्यागणाधिपमित्यत्र नक्तेतस्यामहेश्वरमिति पाठोलिखितः। भक्त्याहतनिषेधतुलस्यादिपदसाहचर्य्यात् पत्रपुष्पादिवत्तत्फलस्योपचारतया दानपरः एका-

आतिफलं ग्रीष्मे धूपानि स्युः प्रियाणि वै। कहिका मांसी। कणं माहिष्याख्यगुग्गुलुः। सितं कर्पूरं। सितेतिपाठे सिता शर्करा। सल्लोनखी ग्रीष्मे विष्णौ कालिकापुराणे, गन्धं पुष्पं धूपदीपौ उपचारांस्तथा परान्। घ्रातान्निवेद्य देवेभ्यो नरोनरकमाप्नुयात्। न भूमौ वितरेद्धूपं नासने न घटे तथा। यथातथा-धारगतं कृत्वा तं विनिवेदयेत्। तथा, सर्व्वंसहा वसुमती सहते न त्विदं द्वयं। अकार्य्यपादघातञ्च दीपतापं तथैव च। तथा, नैव निर्व्वापयेद्दीपं देवार्थ-मुपकल्पितं। दीपहर्त्ता भवेदन्धः काणोनिर्व्वापको भवेत्। विष्णुधर्म्मोत्तरे, यावदक्षिनिमिषाणि दीपोदेवा-लये ज्वलेत्। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। तथा, यः कुर्य्यात्तेन कर्म्माणि स्यादसौ पुष्पितेक्षणः। तेन देवदत्तदीपेन, विष्णुसंहितायां। घृतं तिलतैलं विना न किञ्चिद्दीपार्थमिति। दद्यादित्युन्नीयते। नर-सिंहपुराणे, मोचकं पनसं जम्बुं तथान्यत्तवकीफलं। प्राचीनामलकं श्रेष्ठं मधुकोडुम्बरं तथा। यत्नपक्कमपि ग्राह्यं कदलीफलमुत्तमं। प्राचीनामलकं करमर्द्दकं। वराहपुराणे, अपर्य्युषितपक्वानि दातव्यानि प्रयत्नतः।

---

दर्पणकार्ये गन्धपुष्पाक्षतयवकुशाग्रैर्धूपदीपोपहारैः 'माङ्ग' सपूजां विधिवत् स्तवैः स्तुत्वा नमेद्धरिमित्यक्षतदानविधानं तिलकालङ्कारादि विषयक-मिति श्रीधरस्वामिचरणाः। पुण्यतिनिधि तण्डुल दाननिषेधकं नहि घतैरिति वचनमिति तत्समाधत्त। तेनार्घ्यादौ न तण्डुलदाननिषेध इति बोध्यं यद्दोनखीति श्रवनखी विधानात् हरिभक्तिविलासधृतविष्णु-

खण्डाज्यादिस्नातं पक्वं नैव पर्य्युषितं भवेत्। ब्रह्माण्ड-पुराणे, ताम्बुलमुज्ज्वलं दद्याद्यो विप्रेभ्यः समाहितः। शिवाय केशवायाथ नाकलोके स पूज्यते। श्रीभागवते, यद्यदिष्टतमं लोके यच्चापि प्रियमात्मनः। तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते। मह्यं वासुदेवाय। विष्णुसंहितायां, नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वजामहिषी-क्षीरं वर्जयेत् पञ्चनखमत्स्यवराहमांसानि चेति। नाभक्ष्यमिति यद्यस्य यदभक्ष्यं स्वरूपतोलशुनादि तत्तेन न देयं नतु रात्रौ दध्याद्यपि। पञ्चनखश्च शशाति-रिक्तः। मार्गं मांसं तथा च्छागं शाशं समुपयुज्यते। एतानि हि प्रियाणि स्युः प्रयोज्यानि वसुन्धरे, इति

---

धर्म्मोत्तरवचने प्राणिजात निषेधः द्रव्यान्तरमिलित मृगनाभ्यतिरिक्तपरः। तद्वचनञ्च तथैव शुभगन्धा ये धूपास्ते जगतीपते:। तथा न यक्षधूपं वितरेत् माधवाय सकामनं। यक्षधूपः सर्ज्जरसः काश्मीराश्चभेदं, अत्र यक्षधूपः केवलो निषिद्धः षोड़शाङ्गे तस्य विहितत्वात्। तथा विना मृगमदं धूपे प्राणिजातं विवर्जयेदिति।

यज्ञार्थ्यपादघातं निष्प्रयोजन पादघातं। दीपतापं तथैवचेति कालिकापुराणे तैजसं दारवं लौहं मार्त्तिकं नारिकेलजं। तृण-राज भवञ्चापि दीपपात्र प्रशस्यते। दीपहन्ताच कर्त्तव्या स्तैलसा-र्थेन भैरव। स्थलेषु दीपोदातव्योनचभूमौ कदाचन। दद्यादयथा च पृथिवी तापं नाप्नोतिवै तथा।

मोचकं कदलीफलं सत्वविशेषमाह यत्रपक्वमपीति एतेनाभ्येपां पक्वपक्वं नघार्य्यमितिबोध्यं। उज्ज्वलं गुवाकखदिरादियुक्तं। तदा-नन्त्याय कल्पत इति आनन्त्याय अनन्तफलायमोक्षायेति यावत्। वामन-पुराणे। हविष्यासस्कृता ये च यवगोधूमशालयः। तिलमुद्गादयोमाषा, व्रीहयश्च प्रिया हरेरिति। स्वरूपतः ननुकालविशेषद्रव्यविशेषसम्ब-

वराहपुराणे भगवद्वाक्यात्। तथा, माहिषच्छागाविकं छागमयाज्ञिकमुदाहृतं। माहिषं वर्जयेन्मांसं चीरं दधि घृतं तथा (७८)।

देवलः, चाण्डालेनशुना वापि दृष्टं हविरयाज्ञिकं। विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्। अन्यत्र द्विरभ्योदकस्पर्शादिति। कालिकापुराणे, यस्य यद्दीयते वस्त्रमलङ्कारादि किञ्चन। तेषां दैवतमुद्धार्य्य कृत्वा प्रोक्षणपूजने। उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत्। प्रोक्षणादिलक्षणन्तु, उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतं। न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतं। विष्णुधर्मोत्तरे, द्रव्याणां तत्तद्दैवतमभिधाय। यदन्तु सर्व्वदैवत्यं यदनुक्तं द्विजोत्तमैः। तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतं। गोतमः। अन्तर्जानु वारं कृत्वा सकुशन्तु तिलोदकं। फलाग्रमभिसन्धाय प्रदद्याच्छ्रद्धयान्वितः। योगियाज्ञवल्क्यः, अदृष्टविग्रहोदेवोभावग्राह्योमनोमयः। तस्योङ्कारःस्मृतो-

मेन। तेनेति तेन वर्णनेत्यर्थः। मार्गं मृगसम्बन्धि, माहिषं महिषसम्बन्धिचीरादि। आविकं अविर्मेष स्तत्सम्बन्धिचीरादि। उत्तरार्द्ध चीरादिदर्शनात् (७८)।

हस्तेनेतिजलक्षेपइतिशेषः. अभ्यचोक्तस्याप्यनुय न्यञ्चताऽधोमुखेनहस्तेनेत्यनुषङ्गेनान्वयः तिरश्चा वक्रीकृतहस्तेनावोक्षणमिति वचनमिदं वर्द्धमानधृतं ब्रह्मसहितासम्बन्धि। भावग्राह्यः भक्त्याग्राह्य भक्त्याह मेकयाग्राह्य इति भगवद्वचनात् मनोमय मनसाग्राह्य. ननुवहिरिन्द्रियेण। उत्पत्तिस्थानानीति अकारादय एवं सन्धिवशेनप्रणवभावमाप्ता इत्यर्थः। वर्णानां विष्णुरिति नामनामिनोरभेदोपचारेण वचसा पतिरितिमन्देपा

नाम तेनाहूतः प्रसीदति। विष्णुपुराणे, ओङ्कारो भगवान् विष्णुस्त्रिधामा वचसाम्पतिः। तदुच्चारणतस्तु विनाशं यान्ति राक्षसाः। त्रिधामा त्रीण्यकारोकारमकाररूपाणि धामान्युत्पत्तिस्थानानि यस्य स तथा। तथा, गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः। अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः। नारसिंहे, सर्व्ववेदान्तसारार्थः संसारार्णवतारकः। गतिरष्टाक्षरो नृणामपुनर्भवकाङ्क्षिणां। यस्य यावांस्तु विश्वासस्तस्य सिद्धिस्तु तावती। एतावानिति नैतस्य प्रभावः परिमीयते। तथा, हृत्पुण्डरीकमध्यस्थं शङ्खचक्रगदाधरं। एकाग्रमानसो ध्यात्वा विष्णुं कुर्य्याज्जपं द्विजः। तथा, अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयं। छन्दश्च देवी गायत्री परमात्मा च देवता। नमोनारायणा-

प्रणवस्य पूर्व्वरूपत्वादितिभावः, तथाहि श्रुतिः, चत्वारिवाक्परिमितानि पदानि विदुर्ब्राह्मणा ये मनीषिणः. गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति अस्यार्थः. वाचः ब्रह्माधिष्ठितत्वेन ब्रह्मरूपाया: पदानि ज्ञायते परतत्त्वमनेनेतिपदानि स्वरूपाणि चत्वार्य्येव ये मनीषिणस्ते जानन्ति शब्दद्रष्टृत्वात्। तेषु पदेषु त्रीणि गुहायां मूलाधारमणिपूरकविशुद्धचक्रेषु निहितानिसमुद्भूतानि नादपश्यन्त्याख्यमध्यमाख्यानि नेङ्गयन्ति न स्वरूपं प्रकाशयन्ति सूक्ष्मरूपत्वात्, अतएवमनीषिणोनानुभवन्ति केवलं तुरीयं स्वरूपं कण्ठसमुद्भूतं वैखर्य्याख्यं लिपष्टिवर्णरूपं स्थूलत्वात् मनुष्या वदन्ति जानन्ति। एकादशे च। मयोपदिष्टं भूम्नावबोधानन्तशक्तिना। भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते। मयेतिभगवद्वाक्यं उपदिष्टं अन्तर्य्यामितयाऽधिष्ठितं मूलाधारे उद्भूतं शब्दपदमितिशेषः अन्तर्गतत्वेऽप्यपरिच्छिन्नत्वमाह भूम्नेति अन्तर्य्यामित्वेऽप्यविकारमाह वद्धेति अविकृतस्यापि निय-

येति मन्त्रः सर्व्वार्थसाधकः। भक्तानां जपतां तात स्वर्गमोक्षप्रदायकः। जप मानसे चेति यच्चेचकारपाठाद्वाक्-वचने मानसे च जपशब्दार्थसिद्धिः। देवतां ध्यायन् जपं कुर्य्यादित्यादिना ध्यानमवाङ्गमुक्तं। यत्तु, मन्त्रार्थ-चिन्तानाभ्यासः स उक्तो मानसो जपः। इत्यनेन मन्त्रार्थयो-श्चिन्तनमुक्तं तत्रापि जपशब्दवलाच्छब्दचिन्तनं प्रधानं अर्थचिन्तनमङ्गं। तथाच योगियाज्ञवल्क्यः, वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः। वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति। अतएव, धारयेन्मनसा मन्त्रं जिह्वौष्ठौ नैव चालयेत्। अभावे त्वक्षमालायाः कुशग्रन्थ्या च पर्व्वणा। हारीतः। मन्त्रार्थज्ञोजपन् जुह्वत्तथैवाध्यापयन् द्विजः। स्वर्गलोकमवाप्नोति नरकन्तु विपर्य्यये। नरकन्तु विपर्य्यय इतिनिन्दा मन्त्रार्थज्ञान-प्रशंसापरा मन्त्रैकवाक्यत्वात् नतु सर्व्वथा निषेधपरा।

न्तृत्वं घटयति अनन्तशक्तिनीत भूतेषु सर्व्व प्राणिषु घोषरूपेण नाद-रूपेण लक्ष्यते मनीषिभिः। यथा सूक्ष्मत्वे दृष्टान्तमाह पिपीषु उर्णा-तन्तुरिविति। पश्यन्तीशब्दः प्राणमय उच्यते प्राणोपादानकत्वात् ततो नाभिदेशे मणिपुरकाख्ये तदेवोद्भूतं पश्यन्त्याख्यं मनोमयं मनीषिणां मनोमात्रगोचरत्वात्। ततो हृदि विशुद्धाख्ये चक्रे समुद्भूतं सूक्ष्म-मोङ्काररूपं भवति। इदमिन्द्रियमयं मध्यमाख्यं तदेव कण्ठगतं वैख-र्य्याख्यं स्थूलरूपं लिपिष्टिवर्णमयं व्यक्तं भवतीत्योङ्कारस्य वर्णोपादा-नत्वं नचोङ्कारस्य अकारादिवर्णघटितत्वात् कथं सर्व्ववर्णोपादानत्व-मिति वाच्यं कण्ठगतस्योङ्कारस्याकारादिवर्णघटितत्वेऽपि हृद्गतस्य नत-द्घटितत्वमिति सामञ्जस्यात् तस्याकाराद्यघटितत्वेऽपि तद्घटितस्थूलो-ङ्कारोपादानत्वात्समानाकारत्वाच्च विवृद्धिरित्यनेनाभिधानं प्रमाणविभा-

अन्यथा, वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतं। मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते, इति वृहस्पत्युक्तिविरुद्धा स्यात्। मनुस्तु क्रमाच्छ्रैष्ठ्यमाह। अज्ञेभ्यो-ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः। धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः। ग्रन्थिनो ग्रन्थसापेक्षपाठिनः, धारिणस्तदनपेक्षपाठिनः, ज्ञानिनोऽधीतशास्त्रार्थज्ञाः, एवं, वेदस्याध्ययनं सर्व्वं धर्म्मशास्त्रस्य चापि यत्। अजानतोऽर्थं तत्सर्व्वं तुषाणां कण्डनं यथा, इति व्यासवचनं तथैव व्याख्येयं। व्यवसायिनः शास्त्रार्थानुष्ठायिनः। जपविधिमाह पुरश्चरणचन्द्रिकायां। कनिष्ठा नामिका मध्या चतुर्थी तर्ज्जनी मता। तिस्रोऽङ्गुल्य स्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका। पर्व्वद्वयं मध्यमाया-जपकाले विवर्ज्जयेत्। एनं मेरुं विजानीयाद्दुषितं

वक्तृत्वात् ब्रह्मत्वभिधानञ्च। वेदोत्पत्तिश्च वैराजात्स्वब्रह्मणो मूलाधारादि क्रमेणैव रीत्यावोध्या। हृदये च, ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्त प्रभव स्वराट्। यत्तल्लिङ्गं भगवतो ब्रह्मण परमेष्ठिन। त्रिवृत् त्रिमात्र अव्यक्त प्रभवो यस्य स। स्वराट् मनीषिणा हृदि स्वत एव प्रकाशमान। तदेव कार्य्येण लक्षयति यत्तदिति नपुंसकत्वं लिङ्गशब्द विशेषणत्वात् लिङ्गं गमकमिति। अत्र श्रीधरस्वामिधृताभियुक्तश्लोक। या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते। तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिमस्यां वाचं वक्त्रे करणविशदां वैखरीञ्च प्रपद्ये। अत्र सन्दर्भः। या सा पराख्या मित्रोऽग्निर्वरुण सोमस्तयो सदनं आधारचक्रं तस्मात् प्राण-सङ्गेनोच्चरन्ती स्वयमेव सूक्ष्ममुद्भवन्ती त्रिषष्टिवर्णान् प्रसूते इत्यर्थं। अन्तःकरणाभ्यां प्रकटकरणेन च। अतस्तां प्रथममुदितां पश्यन्त्याख्या शान्त पतति ननूनाम्यति या तां मध्यमां तथा बुद्धिमस्था उद्धा

ब्रह्मणा स्वयं। आरभ्यानामिकामध्यात् प्रदक्षिणक्रमेण तु। तर्ज्जनीमूलपर्य्यन्तं जपेद्दशसु पर्व्वसु। अङ्गुलीनं वियुञ्जीत किञ्चित् सङ्कोचयेत्तलं। अङ्गुलीनां वियोगे तु छिद्रेषु स्रवते जपः। अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने। पर्व्वसन्धिषु यज्जप्तं तत् सर्वं निष्फलं भवेत्। मन्त्रतन्त्रप्रकाशे, तथाङ्गुलिजपं कुर्व्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत्। अङ्गुष्ठेन विना कर्म्म कृतं तदफलं भवेत्। मन्त्रकोषे, हृदये हस्तमादाय तिर्य्यक् कृत्वा कराङ्गुलीः। आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्। कल्पान्तरमाह, अनुलोमविलोमस्थैर्व्विन्दु-युक्ताष्टकाक्षरैः। चमिरुकैः साष्टवर्गैः कृतया वर्णमालया।

रयामीति विचारयुक्ता मध्यमा करणविशदा स्वाभप्रयत्ननिर्मला वैखरी प्रपद्यते। विपष्टिवर्णा वोपदेवमतानुसारेणोच्यन्ते। अत्रय इत्रय उत्रय ऋत्रय लृत्रय एचोह्रस्वाभावादेवाष्टौ विसर्गानुस्वारजिह्वा-मूलीयोपाध्मानीयाश्चत्वार इति सप्तविंशति। ककारादिमकारान्ताः पञ्चविंशति यवला सानुनासिका निरनुनासिकाश्चेति षट् रऊषसहाः इति पञ्चेति मिलित्वा विपष्टिरिति। एवं स्थूलोङ्कारस्य ब्रह्मण एकदे प्रथमोद्भूतत्वात् ब्रह्मवाचकत्वाच्च सर्व्ववर्णात्तमत्वमिति। द्वादशाक्षर ॐ नमोभगवते वासुदेवायेति मन्त्रं गतिर्भगवत्प्राप्तिहेतु ज्ञान हेतुर्वा यावान् यावत्फलविषयक तावती तावद्विषयिणी सिद्धिलाभ। एकाग्रेति प्रत्याहृतचित्तेन विष्णु ध्यात्वा जपेदित्यर्थः। ऋषिरिति प्रथमं मन्त्रं गृहीत्वा तत्र साधकोऽपि ऋषिः, महेश्वरसुखाद् ज्ञात्वा य साक्षात् तपसा मनुं ससाधयतिशुद्धात्मा स तस्य ऋषिरीरित, इति गौतमीयात्। नारायणो धर्म्मपुत्रतयाऽवतीर्णः। परमात्मा सर्व्वान्तर्यामी विष्णु। नरसिंहपुराणे निष्फलमाह यथा। अष्टाक्षरेण देवेश नर सिंहमनामय। गन्धपुष्पादिभिर्निंत्यमर्च्चयेदच्युत नरःति। जपेति

प्रत्येकं वर्णयुक्तान्ता जप्ताः स्युः क्षिप्रसिद्धिदाः। तामाहुः, अकारादिलकारान्तं पञ्चाशन्मणिसूत्रकं। क्षकारं मेरु संस्थाने लकारादिविलोमतः। वर्गाष्टकविभेदेन शत मष्टोत्तरं भवेत्। वैरिमन्त्रा अपि नृणां मन्त्र मन्त्राश्च किं पुनः। अकारादिलकारान्तता अनुलोमता लकाराद्यकारान्तता विलोमता क्षकारस्तु मेरुतया न सङ्ख्या घटकः। साष्टवर्गः अकचटतपयशवर्गयुतैः। एकैकान्तरितं मन्त्रं जपेदेवं फलप्रदं। अन्यत्र च। ब्रह्म-नाड़ीगतानादिक्षान्तवर्णान् विभाव्य च। वर्णं विन्दु युतं कृत्वा शेषं मन्त्रं जपेत् पुनः। अकारादिषु संयोज्य तथा कादिषु च क्रमात्। तदा लिपिर्भवेद्वर्णमालाद्वैशतसंख्यया। अनया सर्व्वमन्त्राणां जपः सर्व्वार्थ साधकः। विद्वान् वाग्मी श्रिया युक्तोमान्योद्भुतकविर्भवेत्। ग्रथिता शक्तिसूत्रेणेति तन्त्रान्तरदर्शनात् कुण्डलिनी सूत्रत्वेन भावनीया। जपसमर्पणमाह, गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत् कृतं जपं। सिद्धिर्भवतु

जपधातुरित्यर्थं। मानमेचेति चकारेण व्यक्तवचनलाभ इपलपव्यक्त-व्यक्तायाम्बाचीतिपूर्व्वात्कानुकर्षादित्यभिप्रायेणाह व्यक्तवचन इति। यत्स्वकत्व निजकर्णगोचरत्व तथाच निरोष्ठोचालयेत किञ्चित् देवता-गतमानस। किञ्चिच्छ्रवणयोग्य स्यादुपांशु स जपः स्मृत। तथा तत्रैव। मानसः सिद्धिकामानामुपांशु पुष्टिमिच्छता। वाचिकोमारणे शस्तः कथित जपलक्षण। वाचिक प्रस्फुटाक्षर। तस्य निन्दामाह तन्त्रसारे। मनसा वा जपेत् स्तोत्र वचसा वा मनु जपेत्। उभय निष्फल याति भिन्नभाण्डोदक यथा इति। देवतागतमानस इति जपाङ्गतयोक्त ध्यात्वाविष्णुमित्यकृताकालान तत्र न्यायत्वयेनानन्तर्थ्यम्या

तीर्थेषु यत् फलं तत् फलं नरः प्राप्नोति स्तुत्वा देवं जनार्द्दनं। स्कान्दे, अहन्यहनि योमर्त्यो गीताध्यायन्तु सम्पठेत्। द्वात्रिंशदपराधैश्च अहन्यहनि मुच्यते। ते चापराधा वराहपुराणे दर्शिताः (८०)।

श्रीभागवते। नानातन्त्रविधानेन कलावपि तथा शृणु। ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यं। भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दं। त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्म्मिष्ठ आर्य्यवचसा यदगादरण्यं। मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दं। एवं युगानुरूपाभ्यां भगवान् युगवर्त्तिभिः। मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः। स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत्। शिरोमत्

इति अनिति जीवत्यनेन मननविपर्य्ययेणेति व्युत्पत्ते र्जीवनत्वविलक्षणं सामान्यशब्दस्य विशेषपरत्वात् यद्वा धातूनामनेकार्थत्वात् अनधातोर्मननार्थकत्वादिद। तेषां मतानां सहस्राणाञ्च नतु दशवाक्षरस्यापि परामर्शः। मन्त्रानुक्तौ शतं साष्ट सहस्रं वा जपादिष्विति महाकपिलपञ्चरात्रवचनस्वरसादेवमन्त्रसङ्ख्यानुक्तावित्युपादानात् यत्र काम्यविधौ शतसहस्रयोरेवोपादानं तत्र नाष्टाधिक्यं नित्यनैमित्तिकपूजाद्यङ्गजपादौ चाष्टाधिक्यनियम इति बोध्यं। विशेषात विषयान्तरानुसन्धानात्। *अधविवादं दारादिजं कुशदशिवरहितकं वा प्रासतोवस्त्रादिना।* प्रलपन्शब्दान्तरमुच्चरन् सर्व्ववेदेष्विति अधीतेषु इति शेषः सर्व्वतीर्थेषु वासादिना (८०)।

हे प्रणतपाल हे महापुरुष इति सम्बोधनद्वयं ध्येयं ध्यानार्ह मर्हेत्यस्य सर्व्वत्रसम्बन्धः धीयते तेनैव परिभवघ्नमित्यादयः। अन्ये

पार्श्वयोः कृत्वा बाहुभ्याञ्च परस्परं। प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवादिति, भगवद्वाक्यं। स्मृतिः, न देवं पृष्ठतः कृत्वा प्रणामं क्वचिदाचरेत्। धरसुत्थाय कर्त्तव्यं न दघा भ्रमयाच्चरेत्। एतन्निष्ठयोति पश्चात् कृत्वा तु योदेवं ग्रमिल्वा प्रणमेन्नरः। तस्यैहिकं फलं नास्ति न परत्र दुरात्मनः। तथा भ्रान्त्वा चतुःपार्श्वं श्रीकृष्णं योनमेन्नरः। साष्टाङ्गप्रणिपातेन तस्य मुक्तिः करे स्थिता। स्कान्दे, सर्वं कृत्वा तु शङ्खेन यः करोति प्रदक्षिणं। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। वामनपुराणे, . त्रिःप्रदक्षिणं यः कुर्य्यात् साष्टाङ्गकप्रणामकं। दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः। नारसिंहे, उरसा शिरसा दृष्ट्या वचसा

परिभवस्तिरस्कारस्तं हन्ति दूरीकरोति यस्तं तीर्थास्पद गङ्गादितीर्थानामाश्रयत्वेन महापावनं। शरण्यं सर्व्वेषामाश्रयणीयं अधिकारिविशेषनिरपेक्षभजनीयमिति यावत्। भवाब्धिपोतं संसारार्णवतारकं त्वमेति यदगात् इत्यत्र यत् य इत्यर्थे आर्य्यस्य गुरोर्दशरथस्य वचसा। मायामृगं मायया धृतस्वर्णमयमृगरूपं राक्षसं दयितया सीतया ईप्सितं भक्तवत्सलता सूचिता। यद्वा यदिति चरणारविन्दविशेषणं ते तव यच्चरणारविन्दं शरण्यं अगात् मायामृग मन्वधावत्। हे धर्म्मिष्ठ ते तवतच्चरणारविन्दं वन्दे इति। अत्र कलावपि सद्यास्मणि त्वनन्तरं। कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदं। यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्तिहि सुमेधस इति वचनमस्ति तन्त्वविधानेनेति, कलौ तन्त्रस्य प्राधान्यं द्योतयति। कृष्णं ति वर्णोनाम यस्य कृष्णोवर्णो यस्येति समासाभ्यां नामतोरूपतश्च कृष्णावतारोदर्शित ननु कृष्णवर्णत्वे कृष्णता स्यादतः आह त्विषेति इन्द्रनीलमणिवत् उज्ज्वलमित्यर्थं.। अङ्गानि हृदयादीनि उपाङ्गादीनि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः

मनसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्गईरितः। विष्णुधर्मोत्तरे, जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात्। केधृताञ्जलिभि र्नेमुरिति भागवतीयात् शिरोऽञ्जलिसंयोगोऽपि नमस्कारः। स्मृतिः, देवताप्रतिमां दृष्ट्वा यतिञ्चैव त्रिदण्डिनं। नमस्कारं न कुर्य्याच्चे दुपवासेन शुद्ध्यति। ब्रह्मपुराणे, यत् किञ्चित् क्रियते कर्म्म सदा सुकृतदुष्कृतं। तत्सर्व्वं त्वयि संन्यस्तं त्वत्प्रयुक्तं करोम्यहं। इत्यनेन समर्पयेत्। भागवते, मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्द्दन यत्पूजितं मया देव परिपूर्णं तदस्तु मे। पूजानन्तरं शङ्खपूजामाह मन्त्रतन्त्रप्रकाशे। पूजयेद्गन्धपुष्पाद्यैः शङ्खं वै देववद्बुधः।

---

सुनन्दादयः तैः सहितं यत्प्रदर्शनादिभिः सङ्कीर्त्तनं नामरूपगुणादिवचनं तत् प्रधानैः यजन्ति आराधयन्ति तन्त्रविधानेनेत्यनेनास्यान्वयः। सङ्कीर्त्तनमेव ध्येयमिति श्लोकद्वयं यत्र रामचन्द्रवन्दनकथनं श्रीकृष्णश्रीरामयोरेकरूपत्वं दर्शयति। युगानुरूपाभ्यां नामरूपाभ्यां युगानुरूपत्वञ्च कलौ लोकानां जडत्वादिदोषबाहुल्यात् ध्यानाद्यनधिकारिणामुद्धारायाविष्कृतपरममङ्गलायनत्वं। एतच्च निमिं प्रति श्रीकरभाजनवाक्यं। भगवद्वाक्यमाह स्तुत्वेति, भगवन् प्रसीदेत्युक्त्वा वन्देतेत्यन्वयः। पाद्यौ पादयोर्मध्ये परस्परं मिलिताभ्यां बाहुभ्यां सहेति बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं समदक्षिणोत्तरौ पादौ गृहीत्वा यद्वा पृष्ठतः परस्परनिबन्धाभ्यामिति स्वामिपादाः प्रपद्य पाहीत्याद्युच्चरन्। मृत्युग्रहं संसारं स एवार्णवस्तस्मात्। ध्यानस्य सङ्कीर्त्तनस्याप्याह वरं सुत्वायैतिकर्त्तव्यमिति करशिरःसंयोगरूपमितिवन्दनमिति शेषः। एतद्धि वृणोति प्रणामस्य दृष्टान्तविवरणं। दशाश्वमेधस्येति चानुषङ्गिकं कामनाविषयञ्च वस्तुतस्तु एकोऽपि सकृत्कृतप्रणामो दशाश्वमेधाव •

नारसिंहे, अतः प्रभृति निर्म्माल्यं मा लङ्घय महामते। नरसिंहस्य देवस्य तथान्येषां दिवौकसां। भविष्ये, यश्च पूजयते देवान् ब्राह्मणोद्रव्यलोभतः। भृत्या भरतशार्दूल स याति नरकं ध्रुवं। भृत्या वेतनेन। देवलः, इष्टं दत्तमधीतञ्च तप्तं वाप्यात्मना तपः। प्रयच्छत्यपरेभ्यश्च धनार्थं धर्म्मविक्रयी। संवत्सरप्रदीपे, विष्णालय-समीपस्थान् विष्णुसेवासमागतान्। चाण्डालान् पतितान् वापि न स्पृष्ट्वा स्नानमाचरेत्। उत्सवे वासुदेवस्य स्नायाद्योऽशुचिशङ्कया। तादृशं कल्मषं दृष्ट्वा सवासा जलमाविशेत् (८१)।

अथ द्वादशीनियमाः। द्वादश्यामपि विष्णुपूजनं। एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्दयितनावा, इति भविष्यपुराणात्। यद्वदिति, यथा द्वादश्यां विष्णूपासनाय एकादश्यामुपवासं

---

भूयैर्नतुष्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय इतियोगमच्छ इत्याद्यैश्वतवचनात् मुक्तिरेवफलमिति। त्वयोति रात्रि भर्त्यर्नेनेति शेषः त्वत्प्रयुक्तं त्वदर्थं त्वत्प्रीत्यर्थमनेति यावत् मन्तार्थ्या-मिणा त्वया प्रवर्त्तितत्वादितिभावः। देवबुध इति अथ देवाधिष्ठाना-दितिभावः अथ संवत्सरप्रदीपे पुराणसर्व्वस्वेच स्कन्दपुराणं। न भूमौ स्थापयेत् शङ्खं कदाचिदपि मानवः। विष्णोः पूजावसानेतु शङ्खमेव समर्च्चयेत्। ॐ त्वं पुरा सागरोत्पन्नो विष्णुनाविधृतः करे। निर्म्मितः सर्व्वदेवैश्च पाञ्चजन्य नमोऽस्तुते। इत्यगदेषु पाञ्चजन्यत्वं भावनयैव पूजाकार्य्येति भावः। पाञ्चजन्यस्यैव पूजनमिति वा (८१)।

अथ द्वादशो नियमा इति। उच्यन्ते इति शेषः। उपासनाय द्वादश्यामिति नच द्वादश्यां विष्णूपासनार्थत्वे एकादश्युपवासस्याङ्गत्व-

प्रकुर्व्वन्ति तथा द्वयमपि षष्ठीयुक्ता सप्तमी उपोष्या सप्तम्यां सूर्य्योपासनायेत्यर्थः। ब्रह्माण्डपुराणं, कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणं। व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनं। शिलापिष्टं मसूरांश्च द्वादशैतानि वैष्णवः। द्वादश्यां वर्ज्जयेन्नित्यं सर्व्वपापैः प्रमुच्यते। पुनर्भोजनमध्वानं यानमायासमैथुने। उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी। वृद्धशातातपः, उपवासं द्विजः कृत्वा ततोब्राह्मणभोजनं। कुर्य्यात्तथास्य सगुण उपवासोहि जायते। सगुणः साङ्गः। कात्यायनः, मिथ्यावादे दिवास्वप्ने बहुशोजनसेवने। अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः। तथा, द्वादश्यां पारणं कुर्य्याद्वर्जयित्वाप्युपोदकीं। उपोदकी पूतिकाशाकं। कूर्म्मपुराणे, कांस्यं मांसं सुरां क्षौद्रं हिंसां तैलमसत्यतां द्यूतक्रीड़ां दिवानिद्रां व्यायामं क्रोधमैथुनं। द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत्। संवत्सरप्रदीपे, अभ्यङ्गञ्च पराान्नञ्च तैलं निर्म्माल्यलङ्घनं। तुलसीचयनं द्यूतं पुनर्भोजनमेव च। वस्त्रपीड़ां तथा क्षारं द्वादश्यां वर्जयेद्बुधः। अभ्यङ्गो येन केनापि तैलं तिलतैलं सार्षपमपि निषिद्धं। अभ्यङ्गमाह आयुर्व्वेदे,

---

मायातीति न प्रधानत्वमितिवाच्यं द्वादश्यामिच्छन् द्वादश्यामपीत्यर्थात् तथाचैकादशी द्वादश्योस्तुल्यत्वेन द्वादशीयुतायामेकादश्यामुपोष्य तद्दिने एकादशीनिमित्तकविष्णुपूजां विधाय परदिने द्वादश्यां तन्निमित्तक विष्णुपूजा एकादशीदिने द्वादशीद्वये च तन्त्रेणैकैवपूजेतिभाव, अतएव स्नात्वासम्यग्विधानेन प्रातःस्नात्वा हरिं पूज्य उपवासं समर्पयेदिति, अन-

मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतं। स्रोतोभिस्त-र्पयेद्बाहू अभ्यङ्गः स उदाहृतः। तैलमल्पं यदङ्गेषु न च स्नाद्दाहुतर्पणं। सा मार्ष्टिः पृथगभ्यङ्गो मस्तकादौ प्रकी-र्त्तितः। स्मृतिः। घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासित अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः। अभ्यङ्गइति द्वादशीतरपरं नित्यमइति पर्व्ववारादावपि। वारि द्रव्य-दानेनापि प्रतिप्रसवमाह स्मृतिः, रवौ पुष्पं गुरौ दूर्व्वां भूमिं भूमिजवासरे। भार्गवे गोमयं दद्यात्तैलदोषोप-शान्तये। दद्यात्तैलइति शेषः। निर्म्माल्यलङ्घनमन्य-स्यापि निषिद्धमघाधिवादोपकर व्रतहानिकरं वा। चार व्रतस्य। मन्दमङ्गलषष्ठीषु द्वादश्यां शाववासरे। वस्त्राणां क्षारसंयोगोदहत्यासप्तमं कुलं, इति यमवचनात्। एवं परान्नमपि निषिद्धं प्रागुक्तवचनेभ्यस्तत्प्रतिप्रसवमाह स्मृतिः गुर्व्वन्नं मातुलान्नञ्च श्वशुरान्नं तथैवच पितुः पुत्रस्य चैवान्नं न परान्नमिति स्मृतिः। यद्यपि यमेन, पर-पाकेन पुष्टस्य द्विजस्य गृहमेधिनः। इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत्। यस्यान्नेन तु भुक्तेन भार्य्यां समधि-गच्छति। यस्यान्नं तस्य ते पुत्रा अन्नाद्रेतः प्रवर्त्तते। हारीतजमदग्निभ्यां, ब्राह्मणान्नेन दारिद्र्यं क्षत्रियान्नेन

हरिपूजानन्तरमुपवास समर्पणोक्तेः पूजनस्याङ्गत्वमुपवासस्य प्राधान्यं स्फुटमभिहितं। श्वधानं प्रतियानं गमनमित्यर्थः अन्यथा पञ्चमीत्य-नुपपत्तेः, द्विज इति व्रतकर्त्तृमात्रोपलक्षणं सर्व्ववर्णानां स्त्रीणाञ्चव्रताधि-कारस्योक्तत्वात्। क्षौद्रं मधु अमत्वता अमत्वचनं निर्म्माल्यलङ्घनं यद्यपि सामान्यतोनिषिद्धं तथापि व्रतहानिकरत्वेनात्रोक्तमिति। यम-

प्रेष्यतां। वैश्यान्नेन तु शूद्रत्वं शूद्रान्नैर्नरकं व्रजेत्, इति परान्न सामान्यतोनिषिद्धं। तथाप्यधिकदोषकर व्रतहानिकर वा। अष्टम्याञ्च चतुर्द्दश्यां षष्ठ्याञ्च द्वादशीन्तथा। अमावास्यां चतुर्थ्याञ्च मैथुनं योऽधिगच्छति।" तिर्य्यग्यानौ समागच्छेन्मम लोकं न गच्छति। मम विष्णोः। द्वादशीमधिकृत्य कात्यायनः, प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत्। अज्ञानतिमिरान्धस्य व्रतेनानेन केशव। प्रसीद सुमुखोनाथ ज्ञानदृष्टिप्रदोभव। कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव। संसारार्णवमग्नानां प्रसीद मधुसूदन। विष्णुधर्म्मोत्तरे, द्वादश्याः प्रथमः पादोहरिवासरसंज्ञकः। तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः। पारणकालः स्वल्पापि द्वादशी। ननु, त्रयोदश्यां यदा न स्याद्वादशीघटिकाद्वयं। उपोष्या दशमीविद्धा सर्व्वैरेकादशी तदा, इति नारदीयवाक्यात् घटिकाद्वयमेव पारणकालः। घटिका दण्डः। यथा ब्रह्मसिद्धान्ते, घटिषष्ट्या दिवानिशमिति। अत्र केचित् घटिकाद्वयमिति पारणकालोपलक्षणं अन्यथा तदधिकेऽपि द्वादशीनिर्गमे प्रातर्वक्त्रावलोकनविद्धाऽप्येकादश्युपोष्या स्यात्। नच घटिकात्रयादिष्वपि क्षितिमस्तीति तत्रापि

---

पीडा वस्त्रनिष्पीड़न क्षार वस्त्रेषु क्षारसयोग अत्र तुलसीचयन वस्त्रनिष्पीडनतत्क्षारसयोगवर्ज्जने द्वादश्यामिति द्वादशीतिथिपर नतु पारणदिनपर तेन क्वचित्त्रयोदश्यां पारणे न निषेध अभ्यङ्गादिनिषेधे पारणदिनपर वचनान्तरैकवाक्यत्वात् मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्ध वासर। वस्त्राणां क्षारसयोगो दहत्यासप्तम कुलमिति वचनात सक्रान्त्या

तद्वाक्यादरइति वाच्यं यतः पूर्व्वसंख्यानार्थेनैवोत्तर-संख्योत्पादनात्। अन्यथा पशुना यजेत इत्यत्र एकत्व सङ्ख्याविवक्षायामपि उपात्तपश्ववयवविनाशे पश्वन्तरा-वयवेन सहानुष्ठानं प्रसज्येत, तस्माद्यथा काकेभ्योदधि रक्षतामित्यनेनोपघातकमात्रं लक्ष्यते तेन श्वादिभ्योऽन्नं रक्षतएव। तथाच भट्टपादाः, काकेभ्योरक्षतामन्नमिति-बालोऽपदेशतः। उपघातप्रधानत्वात् श्वादिभ्यः किं न रक्षति। तथा घटिकाद्वयमित्यनेनापि पारणयोग्यकाल उपलक्ष्यत इत्याहुः। तन्न। प्रत्यक्षएव पूर्व्वसंख्याप्रत्यय-नाशादुत्तरसंख्याप्रत्ययोत्पादनियमः शाब्दबोधे तु न तथा नियम इति सिद्धान्तः। पशुना यजेतीत्यत्र विधेयविशेष-णत्वेनैकत्वस्य विवक्षितत्वादित्यव्यवच्छेदः अत्र तु काला-द्वयं चयम्बाधीत्यनास्थयोक्तेः स्वल्पेतिश्रवणात् अनेनापि पारणश्रवणाच्च घटिकाद्वयमिति न नियमः किन्तूप-लक्षणं। तथाच नारदीये, एकादश्याः कलाह्येका द्वाद-

---

पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे। वस्त्रं न पीडयेत् स्नात्वा नापि क्षारेण योजयेदितिवचनस्य स्नात्वा स्नायते यस्मिन्निति स्नानसम्बन्धीति वस्त्रस्य विशेषणं क्षारसंयोगान्वयि वस्त्रमात्रस्यानुषङ्गः। वस्तुतस्तु अभ्यङ्गादि साहचर्य्यात् पारणदिनमात्र एव वस्त्रनिष्पीडनादिनिषेधः। तथा मन्व-मङ्गलवारादिसाहचर्य्येन कुचिदुक्तत्वात् द्वादश्यादौ निषिद्धइति यथा-योगं मन्तव्यं। येन केनापि घृतसार्षपादिनापीत्यर्थे द्वादशीतरपर-मिति द्वादश्यामभ्यङ्गस्य पृथङ्निषेधादिति सार्षपादौ तैलपदप्रयोगो गौणः। गुर्व्वन्न गुरुपत्नीच गुरुशब्देनैकशेषात् तयोरन्न न पराद्यमित्यर्थः। एव मातुलान्न श्वशुरान्नमित्यत्राप्येकशेषात् मातुल मातुलानीनां श्वशुरश्वश्रूणामन्न न परान्नमित्यर्थः। प्रशान्तिमित्यन्धइति मर्मेति

श्याश्च कलाद्वयं। द्वादश द्वादशीं हन्ति त्रयोदश्यान्तु पारणं। कलाद्वयं त्र्यं वापि द्वादशी च यदा भवेत्। पारणे मरणे वापि तिथिस्तात्कालिकी स्मृता। तात्कालिकी नतूपवासादिवत्तिथ्यन्तरसहायतापि। तथा, स्वल्पायामपि राजेन्द्र द्वादश्यामरुणोदये। स्नानार्च्चनक्रियाः कार्य्या दानहोमादिसंयुताः। भागवतटीकायां, कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्धमेव हि। अमध्याह्नाः क्रियाः सर्व्वाः कर्त्तव्याः शम्भुशासनात्। निशीथात् महानिशायाः। विशेषतोनिशीथे च शुभं कर्म्म न शर्म्मणे। अतोविवर्ज्जयेत् प्राज्ञो स्नानादिषु महानिशां, इत्यनेन निशीथमहानिशयोरेकत्वश्रुतेः पूर्व्ववचनेऽरुणोदयइति श्रुतेश्च। स च कालः स्कान्दनारदीययोः। उदयात् प्राक् चतस्रस्तु नाडिका अरुणोदयः। तथा हेलायुधधृता स्मृतिः। प्रदोषे घटिकायुग्मं प्रभाते घटिकाद्वयं। दिनवत् सर्व्वकर्म्माणि कारयेन्न विचारयेत्। अत्राप्य-

---

विशेष्यमध्याहार्य्यं स्वल्पापीति पारणयोग्येत्यर्थः। दशमीविद्धाऽरुणोदयविद्धा यथा घटिकायाद्दण्डरूपत्वे प्रमाणं पूर्व्वसंख्यानाशेनैवेति, उत्तरसंख्याया पूर्व्वसंख्याया प्रतिबन्धकत्वादितिभावः। तथाच तृतीयदण्डोत्पत्तौदित्वनाशेन त्रित्वोत्पत्तौ दण्डद्वयाभावइति तत्र पारणं नस्यादिति पर्य्यवसितं प्रपद्येत इति तथाच पक्षान्तरे एकत्वं नास्तीति पक्षान्तरमितिभावः। तस्माद्दण्डद्वयविवक्षाया दण्डत्रयात्मकद्वाभ्यां पारणाभावप्रसङ्गात्। उपलक्ष्यते इति तथा च काकेभ्यो दधिरक्षतां इत्यत्रयथाकाकपदं दध्युपघातकपरं तथाघटिकाद्वयमित्यत्र घटिकाद्वय पदं पारणयोग्यद्वादशीपरमितिभावः। पूर्व्वसंख्यानाशे नोत्तरसंख्याहेतुरसम्भवात्। किन्तु पूर्व्वसंख्याज्ञाननाशे उत्तरसंख्याज्ञानहेतु, एको

सामर्थ्ये कात्यायनः, सन्ध्यादिकं सर्वन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वा तु नैत्यिकान्ते भुजिक्रिया। देवलः, सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथं। अद्भिस्तु पारणं कृत्वा पुनर्भुक्तं न दोषकृत्। भक्तं नक्तव्रतं। एतदप्युपलक्षणं सङ्कटे विषमे इत्युपक्रमात्। अद्भिः पारणविधानात्तन्नियमः। द्वादश्यनिर्गमे तु नारदीयं। त्रयोदश्यान्तु शुद्धायां पारणं पृथिवीफलं। शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयं। पारणं तुलसीमिश्रितनैवेद्येन कुर्य्यात्। तथाच स्कन्दपुराणं, नैवेद्यं कृत्वा चैवोपवासन्तु भोक्तव्यं द्वादशीदिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनं। अस्य व्रतस्य, न व्रतिनां व्रते इति विष्णुवचनादशौचेऽपि कर्त्तव्यता। अत्र व्रतिनामारब्धव्रतिनामित्यर्थतया अशौचे आरम्भो न कार्य्यः। विष्णुधर्म्मोत्तरे। असम्भाव्यान्हि सम्भाव्य

द्वावित्यप्रयोगात् एको न द्वावित्यादिप्रयोगाच्च स च कार्य्यकारणभावः मत्यवसन्तर्भाव्येवेति, आस्तां घटिकाद्वयद्वादश्या पारणप्राप्ती ज्योतिःशास्त्रतो घटिकात्रयद्वादशीज्ञाने घटिकाद्वयस्यापि ज्ञानं तत्र पारणप्रवृत्त्युपपत्तेरित्यभिप्रायेणाह तदेति। ननु पशुना यजेत इत्यत्र पशुद्वयेनापि यागसम्बन्धः स्यादिति अत आह पशुनेति, एकत्वं अद्वितीयत्वरूपं। द्वित्वव्यवच्छेदः पशुद्वयेन यागव्यवच्छेदः। कलाद्वयं मय धापीति नारदवचने वाकारोऽनास्थायां अनास्था च द्वित्वादिसंख्यायां तदुपादानञ्च पारणयोग्यद्वादश्यां द्वादशीपदस्य लक्षणाग्राहकं इत्यभिप्रायेणाह अत्र तु द्वादशीपारणन्तु। जलेनेति दण्डद्वयनियमे नित्यक्रिया सत्त्वापि पारणसम्भवादितिभावः। न नियमः न नियमितं। महानिशाया इति महानिशा च विज्ञेया मध्यमं प्रहरद्वयमिति वचनात् प्रहरद्वया

प्रातिपदिकलिङ्गादेव पुंसि मन्त्रविनियोगइति। नरं पञ्चत्वमागत मित्यादेस्तस्य सर्व्वनामत्वात् सन्निधेरपेक्षा किन्तु लिङ्गसंख्यानपेक्षयैव प्रातिपदिकार्थता। नचैवं तदेनं संशयापन्नमिति याज्ञवल्क्यीयमन्त्रस्य स्त्रीपरीक्षायां बाधः स्यात् एनमित्यस्य सर्व्वनामत्वेन अस्मात्त्वमितिवत् सन्निहितविभक्त्युपनीतपुंस्त्वविशिष्टव्यक्तिपरत्वेन पाठवैधर्म्म्यादिति वाच्यं। एनमित्यस्य मानुषः शुचिमिच्छतीति स्ववाक्यएव मानुषत्वेन स्त्रिया अपि सन्निधेस्तत्परत्वात्

---

नोह्यः तन्मन्त्रस्य यत्पदेन यः पठति स जानाति इत्यादौ जनत्वादिसामान्यरूपेणैव प्राप्तपितृलोकत्वादिसामान्यरूपेण स्त्रीपु साधारण्येनोपस्थापनात् तस्मैइति तत्पदस्यापि तथाबोधने सामर्थ्यात् तस्यैइतिनोह्य.। नच मन्त्रे येइत्यत्र याइत्यथच याइत्यूह्यः कार्य्यइति तस्मैइत्यत्र तस्यै इत्यूहइतिवाच्यं नरं पञ्चत्वमागत मित्यत्र दत्तोत्तरत्वात्। प्रतिनिधिस्थले श्रुतशब्दप्रयोगे इतियदुक्तं तन्मन्त्रकरणकदाने मन्त्रेच बोध्यं। तेन केवललौकिकवाक्ये न श्रुतशब्दप्रयोगइति धेनुदानाद्यनुकल्पवराटिदानादौ वराट्यादिशब्देनैवदानवाक्यं। नरत्वं पत्निरूपेण इत्यत्र छागत्वं बलिरूपेणेत्यूहेन पाठः। प्रकृत्यर्थासमवेतत्वे तदूहेन पाठस्यावश्यकत्वात् वैकल्पिकस्थले एव [illegible] प्रकृत्यूहेन पाठः। अस्मात्त्वमभिजातोऽसि इत्यत्रास्यास्त्वमित्यूहेनापि न पाठः। अभिजातत्वानन्वयात् नचाग्न्याधाने पत्न्या अपि सहकारितया कथमभिजातानन्वयानुपपत्तिरितिवाच्यं अग्नौ स्त्रिया साक्षादजनकत्वात् तथाप्रयोगे सत्यपापत्तेर्लक्षणाग्राहकमानाभावाच्च अभावे चान्यद्रव्याणामुदकेनापि पूजितः, इति नृसिंहपुराणीयवचनात् पुष्पाभावे च देयानि पत्राण्येव जनार्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्नुयादिति आह्निकतत्त्वधृतवचनाच्च देवपूजायां पुष्पादि प्रतिनिधुदकदाने इदं पुष्पार्थमुदकममुकदेवतायै नमः इतेवं क्रमेण वाक्यरचना कुर्व्वन्ति। वस्तुतस्तु तत्रेदपुष्पं अमुक देवतायैनम इत्येव क्रमेणैव जलदानं पुष्पे इदंपदा-

न तु पयाज्ञावि पुंस्त्वविशिष्टोऽर्थः, अतोऽमङ्गुपदेन स्त्रिया-अपि सन्निविष्टस्यापि पुरुषस्य प्रातिपदिकस्य न विभक्त्या सङ्कोचः पाशन्यायतौल्यात् (८८)।

यथैकभक्तं। स्कान्दे, दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचन। नियमेन, ब्रह्मचर्य्यं तथा शौचं सत्यमामिषवर्जनं, इत्यादिसामान्यव्रतधर्म्मेण। चतुर्थचरणे तु न्यूनं ग्रासत्रयेण त्विति देवलः। द्वात्रिंशत्तु गृहस्थस्येति पद्मपुराणोक्तस्य ग्रासस्य त्रयन्यूनतेति। अत्र च परदिनार्द्धातीतकाले तत्तिथ्यलाभेऽपि परदिन एव तत्समये एकभक्तं कुर्य्यात्। तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तिथिरिति सुमन्तुवचनेनोपवासार्हतिथिखण्डविशिष्टसम्बन्धिदिन एव प्रतिनिधितयैकभक्तविधानात्।

ऽस्य जलत्वाभेदसम्बन्धेनाशाब्दारोपात्मकशाब्दबोधस्वीकारस्यैव तादृशवाक्यजन्यत्वात्। सर्व्वोपचारवस्तूनामभावे भावनैवहि। निर्द्दिष्टेनोद्रूनाथ पूज्यत्वाच्च नारदस्येति, राघवभट्टधृतवचनात् तत्र भावना द्रव्याभावेऽपि सर्व्वोपचारवस्तूनामन्वय, तथाच पूजयेता ध्यानेन भावनाच पुष्पादीनामित्यन्वयदर्शनादाद्यार्य्यारोपेण दानसूचनमितिभावः। नच प्रतिनिषिध्यन्ते मन्त्रे गौण्या लक्षणया वा समवेतार्थतेति कथमुक्तं तत्रापि आद्यार्य्यारोपात्मकशाब्दबोधस्वीकारसम्भवादितिवाच्यं लौकिकवाक्ये तया स्वीकारसम्भवेऽपि वैदिकमन्त्रे तथास्वीकारे भ्रमजनकत्वलक्षणाप्रामाण्यापत्तेरितिदिक् (८८)।

अथैकभक्तमिति, दिनार्द्धसमयेऽतीते इति, पञ्चधाविभक्तदिनपञ्चमांशमुख्य स्वदर्शनकालपर्य्युदस्त इति बोध्यं ग्रासत्रयन्यूनतेति, तथाच ग्रासत्रयेण न्यूनं द्वात्रिंशद्ग्रासं ऊनत्रिंशद्ग्रासमित्यर्थः। परदिन एवेतीति, एतच्च परदिवसीये तिथिखण्डे विहितैकादश्युप-

स्वतन्त्रैकभक्तएव दिनार्द्धसमयातीतकाले तत्तिथिनियमः। एवं नक्तादिष्वपि। अथ नक्तव्रतं। स्कन्दपुराणे, प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः। उदयात्तु तदा पूज्या हरेर्नक्तव्रते तिथिः। भविष्यदेवीपुराणयोः, हविष्यभोजनं स्नानं सत्यमाहारलाघवं। अग्निकार्य्यमधः-शय्यां नक्तभोजी षडाचरेत्। एवं नक्तव्रतमात्रगुरुत्वेन प्रागुक्तवायुपुराणवचने नक्तमिति हविष्यान्नादिभोजनस्य कालपरं नतु नक्तव्रतपरं तथात्वे उत्तरोत्तरगुरुव्रतोपदेशप्रस्तावे तदनन्तरं केवलहविष्यान्नोपदेशानुपपत्तेः (८०)।

अथ हविष्यान्नं। स्मृतिः, हैमन्तिकं सिताखिन्नं धान्यं मुद्गास्तिलायवाः। कलायकङ्गुनीवारावास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी।

वासप्रतिनिध्यभिप्रायेण। एवञ्च यत्र पूर्व्वदिने उपवासविधिस्तत्र पूर्व्वदिन एव तत्प्रतिनिध्येकभक्तादिनियम इति। स्वतन्त्रेति, यद्यप्युभयदिने तत्तिथेरलाभे लाभे वा परदिने एकभक्तव्रतं, उदयेतूपवासस्य नक्तस्यास्तमये तिथि। मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति बौधायनवचनादेवमिति, उपवासप्रतिनिधिनक्तव्रतन्तु प्रदोषव्यापिनी ग्राह्या उभयदिने प्रदोषे तिथिलाभे परदिने व्रतं तिथेरस्तसम्बन्धादुभयदिने ऽस्तसम्बन्धे परदिने, परदिने अस्तसम्बन्धाभावे वा त्रिसन्ध्यव्यापिन्या नक्तव्रतबोध्य। हरिनक्तव्रते हरिसम्बन्धिनक्तव्रते एकादशीव्रतानुकल्प इति यावत् सत्यमत्स्यवचनं अग्निकार्य्यं अग्नौदेवताहोमः अधःशय्यामिति खट्वादिशयननिषेधक (८०)।

मिताखिन्नमितिमित शुक्लश्च असिद्धश्चेति धान्यस्य हविष्यत्वे तण्डुलादेस्तदनुपपत्तिरिति धान्यपदं तदवयवपरं तत्र धान्यावयव सिताखिन्नान्वये खिन्नतण्डुल देहविप्लवानुपपत्ति धान्यावयवात्मकपदार्थैक-

पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिड़ी जीर-कञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुड़मैक्षवं। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते। अत्रास्विन्नमित्यभिधानादन्यत्र स्विन्नधान्ये न दोषः। अतएव हारीतः, अथ सूनां व्याख्यास्यामो जङ्गमस्थाव-रादीन् प्राणिनः सूदयन्तीति सूनाः ताश्च पञ्चविधा भवन्तीत्युपक्रम्य चतुर्थीपर्य्यन्तमभिधाय आह चाद्दी-पनतापनखेदनभर्जनपचनादिभिः पञ्चमी तदेवं पञ्चैता निरययोनीरहरहः प्रजाः कुर्व्वन्ति पञ्चभिः पाकयज्ञैर्गृहस्थ वानप्रस्थान् पावयन्तीति। पयोर्थः कल्पतरुकृता कृतः सूदयन्ति प्राणैर्व्वियोजयन्ति। आदीपनं काष्ठादेः, तापनं तोयादेः, खेदनं धान्यादेः, भर्जनं यवादेः, पचनं तण्डु-लादेः। पञ्चसूनाः पाकयज्ञैः सूनादोषात् पावयन्ती-त्यर्थः। एतेन धान्यखेदनं गृहस्थवानप्रस्थाभ्यां कर्त्तव्य-

---

देशे धान्येऽन्वये व्युत्पत्तिभङ्ग। अन्यथा पशुरपशुरित्यादौ लक्षणां विनापि योग्यतापत्तिः पशुपदार्थैकदेशे लोमादौ पशुभेदसत्त्वादिति चेन्न क्वचित् पदार्थतावच्छेदकेऽपि पदार्थान्वयस्वीकारात् यथा परमसुन्दर इत्यादौ पदार्थतावच्छेदकसौन्दर्य्ये परमपदार्थान्वय इति। पशुरपशु-रित्यादौ तात्पर्य्यानुपपत्तित एव लक्षणास्वीकारात्। यद्वा धान्यपदं सिता-सितधान्यावच्छेदे लाक्षणिकं सितासितपदं तात्पर्य्यग्राहकं यथा चित्र-पशुरित्यादौ चित्रपदं तात्पर्य्यग्राहकं उत्तरपदं चित्रगोसम्बन्धिनि लाक्षणिकमिति। एवं मुद्गादावप्यूह्यं दधि चानुद्धृतसारपयोजातं बोध्यं अन्यत्रेति, हविष्यभोजनानियमस्थले पचनादिभिरित्यादिना द्रव्यार्थकरसादिपरिग्रहः निरययोनी प्राणिवधद्वारा पापसाधनानि, पाकयज्ञैः विश्वदेवादिभिर्हेतुभिः पञ्चसूनाः पञ्चसूनाजनितपापानि सूना-मात् सूनागारा पावयन्ति शोधयन्ति। एतेन गृहस्थवानप्रस्थाभ्यां

मिति प्रतीयते। किन्तु तत्र धानाशाकु ग्जननयो-र्यत्नालाभादेव पाकं भवति तद्भ्रान्तिरपि प्रत्ययशैथ्या। अतएव मनुनापि पञ्चसूनाविवरणे चुल्लीयुक्तं। धान्यादौ खेदनविधानात् कृताकृतएव पाकशुद्धिविवेचनं, किः-स्विन्नत्वादिदोषस्य नाकृते। तद्विहित कात्यायनेन, कृत-मोदनशक्त्वादि तण्डुलादि कृताकृतं। व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा मतं। यतो लाजमोदकादि यथा तथा पक्वमपि श्राद्धादौ दीयते। अगस्त्यसंहितायां, दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितं। नारिकेल-फलञ्चैव कदलीं लवलीं तथा। आम्रमामलकञ्चैव पन-सञ्च हरीतकीं। व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः। हैमन्तिकं सिताखिन्नमित्यादिवचनानुसारादेव भोज-व्यवहारः। हविष्येषु यवामुख्यास्तदनु व्रीहयः स्मृताः। माष-कोद्रव गौरादीन् सर्वालाभेऽपि वर्जयेदिति कात्यायनवचनन्तु होमप्रकरणात्तन्नैव। नारायणोपा-ध्यायेनाप्येतद्वचनं यत्र हविष्यान्नस्याग्नौ जुहुयादिति गोभिलोक्त हव्यस्यद्वयसीति व्याख्यातं। एतेन, कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः। हविष्यभुग्जपन्

सूनादोषनाशार्थं यज्ञविधानेन, चुल्लीत्युक्तमिति, स्वेदस्यपानप्रस्थयोरादौप नादं कर्तव्यत्वेन पुनः आवश्यकत्वादिति, धान्यादावित्यादिना मुख्यादि परिहर। खेदनविधानादिति, खेदनस्य कर्तृविशेषानिर्देशादपीति पूरणीय पाकशुद्धिविचार अर्थान्तरादि तत्तवनिबन्धनग्रहणशुद्धिविवेचनं। मा द्दते इति, दानखेदस्यापि धान्यस्य कृतत्वनिःशान् धान्यपाकस्य येन केनापि कृतस्य दोषानवधापनादितिभाव। तण्डुलादीत्यादिना

स्नातः सर्व्वपापैः प्रमुच्यते, इति विष्णुवचनं हविष्येषु यथा मुख्या इत्यादिवचनबोधितमिति व्याख्यातन्तु निरस्तं। एवञ्च, व्रीहयोमुष्टिमात्राःस्युर्व्वापमुद्गायवास्तथा, इति शारदातिलकोक्तं यत्तद्विशिष्य यत्र होमे माषादि विहित तत्परिमाणपरमिति। स्नानस्य वैदिककर्म्माङ्गत्वेन सामान्यव्रतधर्म्मत्वे सिद्धे नक्तव्रते पुनरुपादानमादरातिशयार्थं (अगत्या सामान्यधर्म्मव्युदासेनापि नक्तव्रतसिद्ध्यर्थं वा)। नक्तभोजनकालस्तु भविष्यपुराणे, नक्तं दर्शनान्नक्तं केचिदिच्छन्ति सत्तमाः। मुहूर्त्तोनदिनं केचित् प्रवदन्ति मनीषिणः। नक्षत्रदर्शनान्नक्तमहं मन्ये नराधिप। स्मृतिः, नक्तं निशायां कुर्व्वीत गृहस्थो विधिसंयुतः। यतिश्च विधवा चैव कुर्य्यात्तत् सदिवाकरं। सदिवाकरन्तु यत्प्रोक्तमन्तिके घटिकाद्वये।

---

द्विदलादिपरिग्रहः। जलयोगे धान्यपाकस्य स्वेदनरूपत्वात् धान्यभर्जनेन जातस्य लाजमोदकादेर्नस्विन्नत्वमित्यभिप्रायेणाह अतएवेति, यथा तथा कृतमपि गुडादिकृतमपि। न च लाजादेर्धान्यपाकजत्वे गुडादिकृतस्य गुरुत्वेऽपि मोदकादे कथं गुडकृतस्यापि गुरुत्वमिति वाच्यं स्विन्नमनुदाहृतमित्यनेन सजलतण्डुलपाकेन जातस्य एवास्वत्वबोधनाद्गुडादियोगेन पक्वस्य मोदकस्यान्नत्वाभावात् गुडादिकृतत्व नियमनदोषस्य अतएव श्रवणाद्द्विदलादेरपि कलाकृतत्वेन तत्र पाकगुडादिविवेचनं बोध्यं। मनुते बुधा इति एतद्वचनं पुरश्चरणस्थानीयमिति पुरश्चरणकर्तृकर्त्तृकभक्षणीयहविष्याववोधकं तेन सर्व्वत्र हविष्यत्वेन नारिकेलादिकं न गृह्यत इत्यभिप्रायेणाह हैमन्तिकं सिताखिन्न इत्यादि वचनानुसारादेवेति। ननुवीहैरपि कात्यायनेन हविष्यत्वकथनात् कथं हैमन्तिकमिति वचनेन व्यवहार इत्यत आह होम प्रकरणात् तत्रैवेति नारायणोपाध्यायेनापीति व्याख्यातमित्यनेनानुयः

निशानक्तन्तु विज्ञेयं यामार्द्धे प्रथमे सदा। (भविष्ये, उपवासात्परं भैक्ष्यं भैक्षात्परमयाचितं। अयाचितात्परं नक्तमिति, प्रधानमुपवासस्तदसमर्थे नक्तं तदसमर्थे अयाचितं तदसमर्थे भैक्ष्यं एवमन्यतमकल्पानां तुल्यवद्विध्यसम्भवात्।) सौरनक्तकालस्तु तिथितत्त्वेऽनुसन्धेयः। मार्कण्डेयः। एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन नैवाद्वादशिको भवेत्। अत्र विष्णुपूजाद्वादशीपारणयोरङ्गान्तरापेक्षया प्राधान्यमवगम्यते आनुकल्पिकेऽप्येतयोरावश्यकत्वात् (८१)।

अथ पुत्त्रादिप्रतिनिधिः। स्कन्दपुराणं, पुत्त्रञ्च विनयोपेतं भगिनीं भ्रातरन्तथा। एषामभावएवान्यं ब्राह्मणं विनियोजयेत्। गरुड़पुराणं। भार्य्या भर्त्तृव्रतं कुर्य्याद्भार्य्यायाश्च पतिस्तथा। असामर्थ्ये द्वयोस्ताभ्यां व्रत-

---

एतद्वचनाकर्त्तृगोभिलोक्त हविष्य कर्म्म हविष्यासम्येति सुपा सुपेतिसमासात् हविष्यार्थेनेत्यर्थं। एतेन कात्यायनवचनस्य होमपरत्वेन निरस्तमित्यनेनानुय। विष्णुवचन विष्णुवचनोक्तहविष्य बोधित विहत। नक्तव्रतकालमाह स्मृतिरिति, यतिविधवयो कालमाह यतिरिति, भक्तिके निशाभमोपि सौरनक्तकाल पूर्व्वमुद्दिश्य यथाश्रुत तत्काल इत्यर्थं। नक्तेन नक्तव्रतेन अयाचितेन अयाचितभक्षणाद्येन याच्ञा विना लब्धद्रव्यभोजनेन इति यावत्। दानमात्र यद्यप्येवन उपवासासमर्थश्चेदष्ट विप्रान् भोजयेत्। तावद्धनानि वा दद्यात् यद्वस्तो गुण भवेदिति। अत्रेति एकादश्युपवासानन्तरदिन अवगम्यते इति पूर्व्वोक्तवचनादित्यर्थः। आवश्यकत्वादिति कर्त्तव्यमिति शेषः। नैवाद्वादशिको भवेदित्यनेन द्वादशी सत्त्वे न तत्परित्याग इति सूचित (८१)।

विनियोजयेदिति व्रत इत्यादि, द्वयो प्रत्येक भर्त्तृभार्य्ययोस्ताभ्यां भर्त्तृभार्य्याभ्यां हेतुभ्या दक्षिणा दष्टदैवतेन हया। अत्र पुत्त्रादौ

भर्त्ता न जायते। वराहपुराणे, पितृमातृपतिभ्रातृ
श्वशुर्गुर्व्वादिभूभुजां। अद्दिष्टार्थमुपोषित्वा स्वयञ्च फल-
भाग्भवेत्। अत्रैव विषये कात्यायनः, दक्षिणा नात्र
कर्त्तव्या शुश्रूषा विहिता च सा। ननु प्रतिनिधौ असेव
गर्गेत्यादिमन्त्रस्य फलं कुतान्वेत्विति चेत् प्रधानएव।
तथाच शारीरकभाष्ये श्रुतिः, यां वै काञ्चन यज्ञ-
ऋत्विज आशिषमाशासते यजमानायैव तामाशासत-
इतिहोवाचेति। ब्राह्मणसर्व्वस्वे यजमानायेत्यत्र यजमान-
स्येतिपाठे विशेषः। सरलायांसूत्रं, यां वै काञ्चनर्त्त्वि-
गाशिषमाशास्ते सा यजमानस्यैवेति। अत्र ऋत्विग्यज-
मानपदे प्रतिनिधिप्रधानपरे आकाङ्क्षितत्वात्। अतएव
प्रतिनिधिपुत्रादिना आयान्तु नः पितरइत्यादिरनूह्यएव
पठ्यते। वाक्यस्य काल्पनिकत्वात्तत्र न तथेति। काल-
माधवीये, काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिको
हि सः। काम्ये पूपक्रमादूर्द्धं केचिदिच्छन्ति सत्तमाः।
नित्यं नैमित्तिकञ्च प्रतिनिधिनाप्युपक्रम्य कारयेत् काम्ये
तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात् असामर्थ्ये

मध्येति पुत्रादीनामित्यादि। यजमानाय यजमानार्थं। इत्यत्र मध्ये इत्यागमनपद नीवारविषयपरं किन्तु अधमया शोभार्थविषयोक्त-
विशारदितरं। यजमानायान्तु न इत्यत्रापि वाक्यस्य कल्पनायाः स्वार-
सिकत्वादिति भाव। उपक्रम्य सकम्पर अद्यापि प्रतिनिधिनोत्पन्न-
नानुप। मावर्पदेन कामस्यावच्छेद। प्रतिनिधिनामादित काम-
माधवीयवचनादित्यर्थः। सजातीयमिति मुख्यजन्य प्रतिनिधिं गुड़-
मज्जनमयोति भाव। अजन्तु कदाचिदिति अनादृत्य प्रतिनिधि नित्यनूप-
योध। कविद्धन्न यनादभावोपि अभावस्य प्रतिनिधि। दर्शकादगादौ अवि-

उपक्रमादूर्द्ध्वं प्रतिनिधिनापि कारयेत्। एतच्च काम्यश्रौतपरं काम्यस्मार्त्तन्तु अन्यद्वाराप्युपक्रम्य कार्य्यं। तथाच पराशरभाष्ये शातातपः, श्रौतं कर्म्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्, अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः। अन्तत उपक्रमात् परतः। एतच्च काम्येऽपि प्रतिनिधिविधायकं नित्यनैमित्तिकमात्रपरत्वे श्रौतस्मार्त्तभेदोपादानं व्यर्थं स्यात् तयोरविशेषादेव प्रतिनिधिलाभात्। अतएव भारतपाठादौ तथासमाचारः। स्मृत्यर्थसारे, नाभावस्य प्रतिनिधिरभावान्तरमिष्यते। सजातीयत्वेऽप्यभावान्तरमभावस्य प्रतिनिधिर्नेष्यते। भावस्तु कदाचिद्यथोपवासादौ ब्राह्मणभोजनादीति। नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्। श्रोत्रियाणामभोज्यं यद्द्रव्यं हि तदशेषतः। याज्ञं प्रतिनिधित्वेन होमकार्य्ये न कुत्रचित्। द्रव्यं वैकल्पिकं किञ्चिद्यत्र सङ्कल्पितं भवेत्। तदभावे सदृग्ग्राह्यं न तु वैकल्पिकान्तरं। उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते यदि। तत्र मुख्यमनादृत्य गौणेनैव

अभोजनातिरिक्तभोजनाभावो भोजनसामान्याभावरूपोपवासप्रतिनिधि। नच तत्र हविष्याद्यभोजनमेव प्रतिनिधिरिति वाच्यं। तथा सति हविष्यभोजनं कृत्वा द्रव्यान्तरभोजनेऽपि प्रतिनिध्यनुष्ठानजन्यादृष्टोत्पत्त्यापत्तेः। एवञ्च नक्तं हविष्याद्यमित्यादिवचने हविष्यान्नादिपदं तदतिरिक्तभोजनाभावपरं वस्तुतो हविष्याद्यादिपदं तदतिरिक्तभोजनाभावविशिष्टतद्भोजनपरं। अन्यथा भोजनसामान्याभावस्थले हविष्यान्नातिरिक्तभोजनाभावस्यापि सत्वात् मुख्याप्रतिनिधिजन्यादृष्टद्वयापत्तेः। एवं अनोदनमित्यत्र ओदनभोजनाभावविशिष्टकिञ्चिद्भोजन

समापयेत्। संस्काराणामयोग्योऽपि मुख्यएव हि
गृह्यते। नतु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः।
मुख्ये कार्य्यासमर्थे तु लब्धेऽप्येतस्य नादरः। प्रतिरूप-
कमादाय शक्तमेवोपयुज्यते। कार्य्यरूपैस्तथा सर्वैः
क्षीरैः पुष्पैस्तथा फलैः। गन्धैरसैः सदृग्ग्राह्यं पूर्व्वा-
लाभे परं परं। ग्राम्याणान्तु भवेद्ग्राम्यमारण्यानाम-
रण्यजं। यवालाभे तु गोधूमा स्तथा वेणुयवादयः।
हविष्ये गोघृतं ग्राह्यं तदभावेऽपि माहिषं। छागं वा
तदभावे तु साक्षात्तैलं प्रयुज्यते। तैलाभावे ग्रहीतव्यं
तैलजं तिलसम्भवं। तैलजं तिलभृष्टं तिलसम्भवं
तिलपिष्टादि। तदभावे तु सर्व्वेहं कौसुम्भं सर्षपो-
द्भवं। वृक्षस्नेहस्तथा ग्राह्यः पूर्व्वाभावे परः परः।
तदभावे गवादीनां क्रमात् क्षीरं विधीयते। तदभावे
दधि ग्राह्यमलाभे तिल इष्यते। यत्र मुख्यं दधि क्षीरं

---

मेव लभ्यं मन्यथा उपवासकर्त्तु मुख्यप्रतिनिध्युभयसिद्ध्यापत्तेरिति,
न कुत्रचिदभावस्याभाव. प्रतिनिधिरिति। नचोपवासासमर्थ एव प्रति-
निधिः फलजनकस्य, प्रभु प्रथमकल्पस्येत्यादिवचनेन बोधनात् कथ-
मुपवासि कर्त्ते उभयफलसिद्धिरिति वाच्यं। उपवासासमर्थस्य रोगादि-
युक्तस्य सत्यपि कथञ्चिद्दैवयमात् उपवासफल एव प्रति निधिफलस्यापि
सम्भवात्। नच तत्रोपवासप्रतिनिधिभ्यां एकमेव फल जन्यत इति वाच्यं
प्रतिनिधिफलन्यूनताश्रवणात् मुख्यफलप्रतिनिधिफलं प्रत्येकप्रतिनिधे-
र्जनकत्व.दिति दिक्। निषिद्धमिति, यत्र कर्म्मणि यन्निषिद्धं वस्तु सामा-
न्यतोवा तत्र विहितद्रव्यस्यालाभे तत्सदृशमपि तद्वस्तु तत्र कर्म्मणि
सामान्यतो वा न नियोजयेत्। यथामुद्गाभावे माषादिकमित्यर्थ.।
द्रव्यं वैकल्पिकमिति, व्रीहियवादिविकल्पस्थले व्रीह्यादिकरणकत्वेन यागी

तत्रापि तद्‌लाभतः । अजादेः क्षीरदध्यादि तदभावेऽपि गोघृतं । मुख्यासन्नोऽथवा ग्राह्यः कार्य्यकारणसन्ततौ । अतएव घृताभावे पूर्व्वं दधि ततः पयः । तथा, सर्व्वं च गौणकालेषु कर्म्म चोदितमाचरेत् । प्रायश्चित्तं व्याहृतिभि र्हुत्वा कर्म्म समाचरेत् । मत्स्यसूक्ते, घृतं न लभ्यते यत्र शुष्कक्षीरेण होमयेत् । क्षीरस्य च दधि ज्ञेयं मधुनश्च गुड़ोभवेत् । आयुर्व्वेदे, मधु यत्र न लभ्येत तत्र जीर्णगुड़ोभवेत् । पैठीनसिः, काण्डमूलपर्णपुष्पफल-प्ररोहरसगन्धादीना साहश्येन प्रतिनिधिं कुर्य्यात् सर्व्वाभावे यवः प्रतिनिधिर्भवतीति । काण्डं नालं, प्ररोहोऽङ्कुरः । सर्व्वालाभे यवइति कल्पतरुः । अवयवइति नारायणोपाध्यायः । शान्तिदीपिकायां नारदीयपञ्च-रात्र, अभावे चैव धातूनां हरितालं विधीयते । वीजानामप्यभावे तु यव एकः प्रशस्यते । चौषधी-

मद्गल्पितं तदभावे शाल्यादिकं सदृशं ग्राह्यं ननु यवादिकमिति भावः । संस्काराणामयोग्योऽपि इत्यवघातादिरूपसंस्कारानर्होऽपि मुख्यो व्रीहि तण्डुलादिरेव स्यात्ते ननु तत्प्रतिरूपकशालिधान्यादिकमवघातयोग्य मपीति समुदितार्थः । मुख्ये व्रीह्यादौ कार्य्यान्तर्मे पुरोडाशाद्यनर्हे एतस्य मुख्यस्य प्रतिरूपकं तत्सदृशं शाल्यादिकं मत्र पुरोडाशादियोग्यं । कार्य्यैरित्यादि वृत्तोयान्तानां सहगित्यनेनान्वयः । परपर इति मुख्या भावे तत्कार्य्यतुल्यकार्य्यं वस्तु ग्राह्यं तदभावे मुख्यसमानरूपं तद भावे मुख्यसमानपर्णमित्यादिकं वोध्यं तैलं तिलतैलं तदैव मुख्य प्रयोगात् कौसुम्भ कुसुम्भतैलं गवादीनामित्यादिना क्रमात् सर्पिषा जयो परिग्रहः । अभावे दध्यभावे, मुख्यासन्न मुख्येन साक्षात् कार्य्य-कारणभावरूपसम्बन्धवान् कार्य्यकारणसन्ततौ कार्य्याणां कारणानां

नामभावे तु सहदेवा प्रशस्यते। रत्नानामप्यभावे तु मुक्ताफलमनुत्तमं। लौहानामप्यभावे तु हेमपात्रं प्रकल्पयेत्। लौहानां तैजसपात्राणां। न्यायप्राप्त-प्रतिनिधिमधिकृत्य जैमिनिः, न देवताग्निशब्दक्रिय-मिति। अस्यार्थः देवताया आहवनीयादेर्मन्त्रस्य प्रयाजाद्यदृष्टार्थकर्मणश्चादृष्टमात्रार्थकत्वेनारादुपकारकत्वान्न प्रतिनिधिः। व्रीह्यादीनान्तु सन्निपत्योपकारकानां पुरोडाशसाधनं दृष्टमेव प्रयोजनमिति तत्र प्रतिनिधिरुचित-

साध्यत्वे तेषां साक्षात् परम्पराक्रमेण वा तुल्ये, गौणेति, मुख्यकाला-वयवस्तत्सदृश्यावयवः। ओषधीनां फल-पाकान्तानां, सहदेवावलादण्डोत्पलयोः प्राचीनौषधौ। सहदेवीतु सर्पाख्या सहदेवीतु पाण्डवीति। अत्र शारिवाद्याद्या ओषधित्वेन स्यात्। नदेवतेति, इन्द्रोक्तं तथाच देवतादित्रयं न प्रतिनिधिमर्हतीत्यर्थः। तत्र देवताः पूज्यत्वेन विधिप्राप्ता इन्द्रादयः। एवं यत्राग्नौ होमो विहितः येन मन्त्रेण कार्य्यकरणमुक्तं यत्र विहितं कर्म्म च तत्र तेषाम सम्पत्तौ सादृश्यादिन्यायेन न देवतान्तरादे ग्रहणं यत्रच वचनमस्ति तत्र तेषामपि प्रतिनिधिग्रहणं तथाच वैदिकाग्नेरभावे लौकिकाग्नि-जलादौ वैश्वदेव होमादि, यथोक्तमन्त्राभावे गायत्र्यादि। चान्द्रायणाद्य-शक्तौ धेनुदानादि क्रियते। देवतापदार्थमाह देवताया इत्यादि, अग्नि-पदार्थमाह आहवनीयादेरिति, शब्दपदार्थमाह मन्त्रस्येति, क्रियापदार्थ-माह प्रयाजाद्यदृष्टेति, मात्रपदेन दृष्टफलव्यावर्त्तनं। आरादुपकारक-त्वेन साक्षात् फलोपयोगित्वेन तथाच देवतायास्तत्तद्देवतात्वेनैव फलजन-कत्वावगमात्, नान्यत स्तत्फलसिद्धिरितिभावः। सन्निपत्य परम्परया, साधनं जननं, दृष्टमेवेति, तथाच प्रधानकर्म्मसाधनस्य पुरोडाशस्य सिद्धार्थं व्रीह्यादिकमुक्तं तदलाभे द्रव्यान्तरेण पुरोडाशादेर्निष्पत्तौ तद-ग्रहणमितिभावः। वस्तुतस्तु आरादुपकारकत्वात् कालान्तरे उपकारक-त्वादाराद्दूरसमीपयोरित्यनेन आरादित्यस्य दूरार्थकत्वाददृष्टद्वारकेणेति

द्दृत्युक्तं। परिशिष्टं, मुख्यकाले तु मुख्यद्रव्यैर्न साधनं नैव लभ्यते। तत्कालद्रव्ययोः कस्य गौणता मुख्यतापि वा। तत्र भरद्वाजः, मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनं। न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणं। गौणेषु तेषु कालेषु कर्म चोदितमारभेत्। प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् (८२)।

उत्तरमत सिद्धान्तमिति केचित्। तदभिप्रायकं मीमांसाषष्ठाध्यायसूत्रं। पौर्व्वापर्व्ये पूर्व्वदौर्व्वल्यं

---

तत्र हेतु स्वत्काले फलजनने अदृष्टस्वीकारानुपपत्ते. एवञ्च वचनं विना गुत्वा अदृष्टद्वारा फलसाधनस्य प्रतिनिधिग्रहणे तदारात्फलस्यादृष्टत्वात् समय एवेति न तदाचरणमितिभाव। सन्निपत्य साचात् तथाच फलस्यादृष्टत्वात् प्रतिनिध्याचरणमितिभाव गौणता अप्रधान्येन अनपेक्षणीयता, मुख्यद्रव्यालाभेन मुख्यद्रव्यलाभार्थं। अत्र हेतुमात्र गौणेष्विति तथाच गौणकाले कर्म्मकरणे प्रायश्चित्तश्रवणात् मुख्यकालत्यागस्य पापहेतुत्वमवगम्यत इति तत्त्यागोऽनुचित किन्तु देवात् मुख्यकालेऽकरणे एवगौणे कर्त्तव्यतेति समाधान (८२)।

केषा मतमाह उत्तरमतमित्यादि, उत्तरमतं मुख्यद्रव्यानुरोधेन गौणकाल कर्त्तव्यतामत सिद्धान्त इति, पूर्व्वमतन्तु पूर्व्वपक्ष इति शेष। समुच्चयासम्भवादिति, पूर्व्वं अदक्षिणयागे कृते यासार्थं किञ्चिद्दरधेन विच्छेदकालीनसर्व्वस्वात्तदनन्तरं सर्व्वस्वदक्षिणयागासम्भव प्रथम. सर्व्वस्वदक्षिणयागकरणे धनाभावनादक्षिणयागासम्भवइति न समुच्चयसम्भवइति। असञ्जातविरोधित्वात् प्रथमनिमित्ताधीनयागस्य निरोधानुपस्थित्युत्तरस्योत्तराभिधानस्य पूर्व्वनिरपेक्षस्य पूर्व्वविध्युत्थापिताकाङ्क्षानुत्थापितत्वात्तथाकाङ्क्षोत्थापितत्वे पूर्व्वस्योपजीव्यत्व बाधायोग इतिभाव। बाधकतयोदितत्वात् अन्यथा तदुत्थानासम्भव इति भाव। बाध्यत्वायोगादिति, तथाचोत्तरनैमित्तिकमेव कार्य्यमिति भाव। पूर्व्वमिति कर्त्तृपदं असञ्जातत्वात् प्राम

प्रकृतिवदिति, ज्योतिष्टोमेऽन्योन्यं सम्पृच्य यज्ञशा-
लातो बहिर्निर्गच्छतामृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं
श्रूयते । यद्युद्गाता विच्छिन्द्याददक्षिणेन यजेत यदि
प्रतिहर्त्ता सर्व्वस्वदक्षिणेनेति । तत्रोद्गातृप्रतिहर्त्त्रोः
क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासम्भवात्
किं पूर्व्वं कार्य्यं उत वा परमिति संशये हि अनु-
पजातविरोधित्वात् पूर्व्वमिति पूर्व्वपक्षे राद्धान्तः पौर्व्वा-
पर्य्ये सति निमित्तयोः पूर्व्वस्यैव निमित्तस्य दौर्ब्बल्यं
उत्तरस्य पूर्व्वनिरपेक्षस्य तद्बाधकतयोदितत्वात् पूर्व्वोदय-
काले उत्तरस्याप्राप्तत्वेन पूर्व्वेण बाध्यत्वायोगात् । उक्तं
हि, पूर्व्वं परमजातत्वादबाधित्वैव जायते । परस्या-

---

नुपजातत्वात् तदर्थस्य प्रागनुपस्थितत्वेनेति यावत् । जायते स्वार्थबोधो-
पधायकतया सम्भवति । अनन्यथोत्पादादिति, अन्यथा तदर्थानोत्-
पादाभावात् विषयभेदविरहेण विरोधाद्यमभिप्राय. प्रथमत. यद्युद्गाता
विच्छिन्द्याददक्षिणेन यजेतेति श्रुत्या उद्गातृविच्छेदकालसामान्ये
अदक्षिणयागस्य कर्त्तव्यताबोधो जायते अनन्तर यदि प्रतिहर्त्ता तदा
सर्व्वस्वदक्षिणेन श्रुत्या बोधकाले क्रमेणोभयविच्छेदस्थले समुच्चयासम्भव-
प्रत्यये च पूर्व्वश्रुतिजन्यबोधे अप्रामाण्यशङ्का जायते अनन्तर पुन पूर्व्व-
श्रुत्यनुसन्धानेन उद्गातृमात्रविच्छेदे अदक्षिणयागकर्त्तव्यताबोधस्तत-
परश्रुत्या प्रतिहर्त्तृविच्छेदस्थलसामान्ये सर्व्वस्वदक्षिणयागस्य कर्त्तव्यता-
बोधात् क्रमेणोभयविच्छेदे सर्व्वस्वदक्षिणस्यैव कर्त्तव्यता तथा प्रथमोक्त-
द्रव्यप्रतिनिधिश्रुतिबाधेन परोक्तगौणकालकर्त्तव्यताबोधकत्वात् मुख्यद्रव्येण
गौणकालकर्त्तव्यताबोधनात् मुख्यद्रव्यार्थं गौणकालमतो बाध्यमितिभाव. ।
चरमाभाविविषयकप्रमाकश्रुतिप्रामाण्ये निरपेक्षन्यायनिरपेक्षश्रुतिलब्धे. । [illegible]
अर्थोत्पन्नत्वं पूर्व्वनिरपेक्षपरोत्पन्नस्य रजतज्ञानस्य शुक्तिकायां रजता-
रोपस्य शुक्तिकाज्ञानेन शुक्तिरियमित्यवधारणेन तदनपबाधने रजतज्ञाना-

नन्ययोत्पादादुक्तबाधेन सम्भवदिति। प्रकृतिवदिति तथाहि प्रकृतौ क्लृप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षिण्यां प्राप्ताः कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिति। अतएव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः ज्येष्ठत्वज्ञानपेक्षितस्य बाध्यत्वे हेतु र्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् तदनपबाधने तदपवादात्मनस्तस्योत्पत्तेरनुत्पत्तेः। तथाच, पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयतां। अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेदिति। यदि च पूर्ववचनस्य पूर्वपक्षत्वेनेत्यर्थं स्यात्तदुभयवचनार्थौ विवक्षणीयौ तदा विषय-

भेदेन व्यवस्थापनीयौ तथाहि यत्राष्टकाश्राद्धादौ कालान्तराभावस्तत्र तत्कालानुरोधाद्विहितद्रव्यालाभेऽपि प्रतिनिहितद्रव्यमादाय मुख्यकालएव तत्करणं ननु वचनानुपात्तस्वेच्छाकल्प्यगौणकालप्रतीक्षणं। तथाच छन्दोगपरिशिष्टं, स्थालीपाकं पशुस्थाने कुर्य्याद्यद्यानुकल्पिकं। श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस न्वित्यादि। यत्राब्दिकश्राद्धादौ कृष्णैकादश्यादिगौणकालोऽस्ति तत्र मृताहादावन्नाद्यभावे तदनुरोधेन उपवासादिरूपं प्रायश्चित्तं कृत्वा गौणकाले तत् कर्त्तव्यं तथाच लघुहारीतः, एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयं। अभावे पाकपात्राणां तदहः समुपोषणं। तथा छन्दोग-परिशिष्टं, संस्कारा

परिहारादित्यर्थः। ननु तथापि कालस्य हेतुत्वात् कथं न तदादर इत्यत आह निमित्तत्वमात्रेणेति, साधारणनिमित्तत्वेनेत्यर्थः बहिरङ्गत्वात् फलहेतुभूतकर्म्मस्वरूपाघटकत्वात्, चकारात्परं नादर इति शेषः द्रव्यादर इत्यत्र हेतुमाह द्रव्यस्यत्वित्यादि। ननु यागादिकर्म्मणः प्राधान्य एव तन्निर्व्वाहकस्य प्राधान्यमित्यत आह कर्म्मणः कारकत्वेन, साक्षात् मुख्यफलजनकत्वेन अन्तरङ्गत्वात् प्राधान्यं यद्वा ननु कालस्यापि जन्यमात्रहेतुतया कर्म्मनिर्व्वाहकत्वमस्तीत्यत आह कर्म्मण इति व्रीहिभिर्यजेतेति श्रुत्या कर्म्मणः करणत्वादित्यर्थः। अन्तरङ्गत्वात् कर्म्मस्वरूपघटकत्वात् व्रीह्यादिकरणकयागत्वेनैव फलहेतुत्वादिति भावः। अत्रेदमवधेयं। अदक्षिणेन यजेतेति श्रुत्यर्थबोधे अप्रामाण्यज्ञानजननं पुनरुद्गात्रमात्रविच्छेदनिमित्तकादक्षिणयागकर्त्तव्यतायां स्वल्पस्वापेक्ष लाघवात् प्रथमतो निरपेक्षादक्षिणयागश्रुत्योद्गात्रविच्छेदसामान्यनिमित्तकादक्षिणयागकर्त्तव्यताबोधानन्तरं सर्व्वस्वदक्षिणश्रुत्या बोध- कर्त्रोरुभयविच्छेदे समुच्चयासम्भवप्रयुक्तेन केवलप्रतिहर्त्तृविच्छेद-

नन्यथोत्पादादुक्तबाधेन सम्भवदिति। प्रकृतिवदिति तथाहि प्रकृतौ क्लृप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षां प्राप्ताः कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिति। अतएव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः ज्येष्ठत्वज्ञानपेक्षितस्य बाध्यत्वे हेतु र्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः। तथाच, पूर्व्वात्परबलीयस्त्वं तत्र नाम प्रतीयतां। अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेदिति। यदि च पूर्व्ववचनस्य पूर्व्वपक्षत्वे वैयर्थ्यं स्यादतउभयवचनार्थौ विवक्षणीयौ तदा विषय-

नपबाधने रजतज्ञानेन शुक्तिज्ञानापबाधने इति शेष तदपबाधात्मन रजतज्ञान प्रतिबध्यस्य तस्य शुक्तिज्ञानस्य, मतोपसंहारकारिकामाह, तथाच, पूर्व्वात् परबलीयस्त्व पूर्व्वोत्पन्नादुत्तरोत्पन्नस्य बलीयस्त्व। स्वमत मनुमाह यदिचेत्यादि, पूर्व्ववचनस्य मुख्यकालमुपाश्रित्य गौणमप्यस्ति- साधनमिति वचनस्य पूर्व्वपक्षत्वे गौणेषु तेषु कालेष्विति वचनेन निरस्त- मूलेनान्यायेन च बाध्यत्वे अप्रमाणत्वेन कल्पितत्वे इति यावत्। विषय- भेदेनेति, तथाहीत्यादि, पशुस्थाने पशोरभावे तत्स्थालीपाक कृत्वे तदेवेति सस्कारतत्त्वे विवृतमिदं। उभयोपसंहारासामर्थ्ये मुख्यद्रव्य- मुख्यकालयो. समवायकरणासामर्थ्यो द्रव्यादर। कर्त्रधीनत्वाभावा- दिति, तथाच स्वसाध्यस्यैव विहितस्यानादरे दोषो नतु स्वासाध्यस्येति भाव, ननु यदा मुख्यद्रव्यसन्निधान तदामुख्यकालो माभ्विद्यत आह वर्जनीयत्वेति, द्रव्यद्वारा कर्म्मस्यानुष्ठितं सति कालस्य विशेषणत्व द्रव्या- भावे कर्म्मानुष्ठानाभावात् तस्य विशेषणत्वाभावात् द्रव्यापेक्षया न्यूनत्व- मिति भाव। सिद्धे कर्म्माद्युपसर्ज्जनत्वेन विशेषणत्वेन उपस्थितत्वात् कार्नीयेति पाठे रोगादिना कालान्तरकरणे मुख्यकालपरित्यागस्यावश्य-

पुत्रादिप्रतिनिध्यभावे तु ब्रह्मवैवर्त्ते, उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्याद्यद्भक्ताद्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसङ्ख्यान् वा यथाशक्ति व्रतेनरः। देवीं गायत्रीं। दाक्ष्यपपञ्चरात्रे, मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं समार्पयेत्। अत्र यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः। निर्निमित्तमदीक्षायां नच क्षुद्व्याधिपीड़ितः। अन्नं वा यदि भुञ्जीत मूलं फलमथापि वा। अपराधमहं तस्य न क्षमामि तु काश्यप। क्षिपामि नरके घोरे कृच्छ्रल्यं मम जायते। निमित्तं प्रारब्धचान्द्रायणादिव्रतविशेषइति, दीक्षायां चरुशेषप्राशनस्य विहितत्वाददीक्षायामित्युक्तं, क्षुद्व्याधिना पीड़ितः, सर्व्वमेतत् प्रदर्शनमात्रं शक्तौ निर्विरोध इत्यर्थः। यज्ञादिकनप्युपलक्षणमिति जीमूतवाहनः। अत्र निमित्तं प्रारब्धचान्द्रायणादीति यदुक्तं, तन्न, चान्द्रायणादौ भोजनस्यावश्यकत्वाभावात्। किन्तु निमित्तं रविवाराद्युपवास-

वचनमष्टकाश्राद्धादिपरतया व्याख्यातमपि न सुन्दरं अष्टकादिश्राद्धे गौणकालकल्पनायाः कुत्राप्यभावाद्मुख्यद्रव्यालाभेनेत्यनुरोधलिङ्गनासङ्गते, नच स्वकालादुत्तरोगौण इति सामान्यवचनबलादष्टकादेरपि गौणकालोऽस्तीतिवाच्यं स्वताहाविदिते तथैति वचनेन देये पितॄणां श्राद्धेत्वित्यनेन चाष्टकादे गौणकालनिराकरणात्। यच्चोक्तं कालस्य निमित्तहेतुत्वेन दुर्व्वलत्वं तदप्यकिञ्चित्करं मुख्यकाले कार्य्यानुष्ठानस्यैव सम्पूर्णफलजनकत्वेन मुख्यकालसाद्गकार्य्यानुष्ठानयोस्तुल्यकदत्यात्, प्रतिनिधौ फलहानिरावश्यकत्वेऽपि गौणकाले कर्म्माचरणे फलद्वयहानेः

अतिपत्स्येरन् स्वकालाच्चेत् कथञ्चन। कुर्य्यातदेवं कुर्व्वीत ये तूपनयनादयः। ननु प्रत्याब्दिकश्राद्धे यथा गौणकालसत्ता तथा मुख्यकालेऽपि गौण द्रव्य-सत्तापि विद्यते का विनिगमना मुख्यद्रव्यपरिग्रहे इति चेदुच्यते यत्र तु विनिगमकवचनाभावस्तत्र यद्यपि क्रियायाः प्राधान्यात् कालोद्रव्यं द्वयमपि गुणभूतमेव तथाप्युभयोपसंहारासामर्थ्ये द्रव्यादरः कालस्य सूर्य्या-दिक्रियाघटितस्य कर्त्रधीनत्वाभावादर्ज्जनीयत्वसिद्धेः अ-सन्निधिकत्वान्निमित्तत्वमात्रेण वहिरङ्गत्वाच्च। कालस्य निमित्तत्वं व्यक्तं भविष्यति। अतः कालं प्रयच्छामि निमित्तं कर्म्मणामिह। द्रव्यस्य तु यागस्वरूपनिर्व्वाहकत्वेनाभ्यर्हितत्वात् कर्म्मणः कारकत्वेनान्तरङ्गत्वाच्च।

---

निमित्तकसर्व्वस्वदक्षिणयागबोधकवचनमत. पौर्व्वापौर्य्यं पूर्व्वं दौर्वल्यमिति सूत्रोदाहरणं सामान्यविशेषाभ्यां श्रुतिद्वयं यत्रोक्तं तत्र पूर्व्वोक्तसामान्य-विधेः सङ्कोचकं यथा ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रमि-त्यादि व्यक्तमिदं प्रकृतिवदिति "दृष्टान्तेन तथाहि प्रकृतिवद्विकृति-रिति न्यायेन सामान्यतः प्रकृतिधर्म्मप्राप्ता कुशा अपि प्राप्ता विशेष श्रुत्या च तद्बाधकतया विकृतौ यागे शरविहिता इति भवतु भवतुवोभयविच्छेदे सर्व्वस्वदक्षिणस्य निरुक्तयुक्त्या आधिक्येनाचरणं तथापि प्रकृतस्थले मुख्यकाले प्रतिनिधिद्रव्येण कार्य्यकरणमेव श्रेयः ननु मुख्यद्रव्यानुरोधेन गौणकालापेक्षणं गौणकाले तत्करणं प्राय-श्चित्तश्रवणात् मुख्यकाले कार्य्याकरणं पापमुत्पद्यते नच गौणकाले तत्करणप्रागभावविशिष्टं मुख्यकालकार्य्याकरणं पापहेतु गौरवात् तथा यत्र मुख्यद्रव्यानुरोधेन गौणकालापेक्षा क्षता कथञ्चित् दैवात् गौणकाले तदकरणे पापस्थितिरिवस्यात् अत उक्तं वरमेकाहुतिः काले नाकाले लक्षकोटयः इति, श्वः कार्य्यमद्य कर्त्तव्यं इत्यादिच। प्रथम-

श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका, इत्युक्तार्थहान्यन्यार्थकल्पनारागप्राप्तबाधरूपदोषत्रयदुष्टाप्यन्ययोगव्यवच्छेदफलिका परिसंख्यैव युक्ता। सा तु सति भोजने तत्तिथौ तत्तद्ग्रासानेव भुञ्जीत नान्यदित्येवंरूपा। तस्यास्तदतिरिक्तभोजनाभावपरत्वेनोपवासेऽपि दोषाभावः। तथाच, अन्यार्थश्रूयमाणा च यान्यार्थप्रतिषेधिका। परिसंख्या तु सा ज्ञेया यथा प्रोषितभोजनं। अन्यथा, प्राजापत्यव्रते चाष्टमग्रासद्याचितमिति मनूक्तस्य अयाचितन्तु मध्याह्ने चतुर्विंशति शुचयइति ब्रह्मपुराणोक्तस्यायाचितस्यालाभे व्रतलोपापत्तिः स्यात्। अयाचितन्तु स्वकीया-

---

क्तत्वविरहेण प्रयोजककर्त्तव्यत्वेन च फलवत्त्व स्यैवेति, दानाद्यनुकल्पे च प्रधानस्योपवासस्य अभावेन ततोऽपि न्यूनफलमिति प्रतिनिध्यभावोऽपो त्युक्त, व्रते व्रतविषये व्रतप्रतिनिधितयेतियावत् एवं प्रागुक्त-हरिवासरे व्रतादिकमप्युग्रेयं दोषितोऽरशीतमन्न, अदोक्तायां यद्यावश्यपदोक्तारोत्व, निमित्तमित्यादिजीमूतवाहनमत आवश्यकत्वाभावादिति, नक्तभोजनविधे परिसंख्यारूपत्वादितिभाव। यद्यपि व्रतपञ्चगव्यपानादौ न। क्वचित्प्रबोधकतयानिमित्तत्वमस्ति तथापि तत्पानस्य जलपानतुल्यतया नदोष। अभक्ष्येण इति वस्तुतो अत्राम्बवादिभोजनं निषिद्ध जलपारणमेव कर्त्तव्यमितिनिमित्तान्तरमेवविवेच्यं अथमक्रियासामान्यद्रव्यभोजन पित्र्य पितृशेषद्रव्य एतच्च नित्योपवासदिनमधिकृत्य वोध्यं जलपारण रविवारादुपवासपारणदिनाभिप्रायकं जलपानस्याप्यशितत्वमनशितत्वञ्चोक्त चरुप्राश दीक्षाभिप्रायकमिदमुपलक्षणश्राद्धशेषभोजनस्थले तच्छ्रवणाद्बोध्यं केचित्तु दोचितइति कथनाददोषायाश्च निर्निमित्त यदिभुञ्जीत इत्यन्वयेन अदोक्षितस्यापि निषेधत्व चान्द्रायणादिवच्च गयणादिव्रतस्थानीयग्रासभोजनपरिसंख्या-

पारणं जलपानरूपं। दीक्षायामपि चरुप्राशनं प्राशन-रूपं, अन्यथा, पुरोडाशोऽपि सोमो वा सम्प्राप्ते हरि-वासरे। अभक्ष्येण समः प्रोक्तः किं पुनश्चाशनक्रिया, इति नारदीयं विरुध्येत। प्राशनस्य चोभयरूपतामाह कालादर्शे श्रुतिः, पिचुमात्रं तत्रैव प्राशितं नैवाप्राशितञ्च भवतीति। पिचुमित्युपलक्षणं चाकाङ्क्षायाश्चवि-शिष्टत्वात्। तेनैकादश्यां तदुभयत्र जलपारणं चरु-प्रेषप्राशनञ्च विधायोपवासः कार्य्यः। अथ चान्द्रायणादि-ग्रासपरिसंख्या। भोजनस्य रागप्राप्तत्वान्नाप्राप्तप्रापको-विधिः सचाहरहः सन्ध्यामुपासीतेत्येवंरूपः। नापि तल्लक्षणस्यावश्यकत्वेन स्वायोगमात्रव्यवच्छेदफलकरूपो-नियमविधिः। सच तत्तत्तिथौ तत्तद्ग्रासान् भुञ्जीतेवे-त्येवंरूपः। तथाच, श्रुत्वा व्याह्रियमाणे तु यत्रावश्यं क्रिया क्वचित्। चोद्यते नियमः सोऽत्र ऋतावभिगमो-यथा। तथात्वे पितृमरणादावपि भोजनं प्रसज्येत। हविष्यभोजनव्रतादावप्युपवासाभावश्चापद्येत। तल्लक्षण-समकालमेवान्यभक्षणेऽपि न दोषः स्यात्। तस्मादगत्या

प्रायश्चित्तस्य च श्रवणात् कालस्याप्राधान्याच्च, एकोद्दिष्टे पाकपात्राभावे यत्नेनकालादरणमुक्तं तत्पाकेनैव सदा स्वयमितिवचनपूर्व्वार्द्धेन पाकस्य नियमितत्वात्। यद्वा अभावे पाकपात्राणामिति बहुवचनस्य गणार्थ-त्वेन आमान्नादेरप्यभावे इति गम्यते इति प्रतिनिध्यामावादे सम्भवे एकोद्दिष्टं मुख्यकाल एव कर्त्तव्यं सामान्यविशेषभावं विना श्रुति-विरोधे विषयभेदकल्पनया समाधानस्यासम्भवे स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारत, इति वचनान्न्यायेन विरोधोवार्य्य इति, पुत्रादि प्रतिनिधिनोपवासाचरणे प्रधानस्योपवासस्य सिद्धिः किन्तु तत्र स्वतन्त्र-

अन्यथा तु फलस्यार्थं धर्म्ममेवोपसर्पति। धर्म्मीयमः।
किञ्च यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधानं
नोपपद्येत, तदाह सएव। सङ्कटे विषमे प्राप्ते द्वादश्यां
पारयेत् कथं। अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न
दोषकृत्। पारणान्तु भवेत् कथमिति वर्षकृत्ये पाठः।
नक्तं त्रयोदशीनक्तभोजनव्रतमिति। अबभक्षणस्याशि-
तानशितत्वेन श्रुतावभिधानात्तदुभयव्रतसिद्धिः। यथा,
आपोवै सर्व्वरसास्तासामशनेनाशितोऽनशितश्च भव-
तीति। एवञ्च, जलस्यापि नरश्रेष्ठ भोजनाम्प्रजायते।
नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा, इति
कालिकापुराणीयं रागप्राप्तपरं। अतएवादित्यपुराणे,
पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनं। असमा-
माप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरं। त्रुत्यञ्च उपवास-
व्रते पारणनियमात् जलेन पारणं विधाय तद्दिने उपवा-
सादिः कार्य्यः। अथ भैमी, विष्णुधर्म्मोत्तरे, मृग-
शीर्षे शशधरे माघे मासि प्रजापते। एकादश्यां
सितपक्षे सोपवासो जितेन्द्रियः। द्वादश्यां पट्-

कोयोगरूढ़ोवा। पारणस्य नियमिताङ्गत्वे प्रमाणमाह तथाचेति,
सङ्कटे त्रयोदशीव्रतादिप्राप्तिनिबन्धनसङ्कटे। एवञ्च व्रताङ्गजलपानं
अनशितत्वेन च भेषजाद्दते भेषजरूपजलपानादिकं विना निवृत्तिर-
करणं नावसीदतीति कृत्यतत्त्वार्णवे तिथितत्त्वेच सक्तुपट्तिलोभुक्त्वा
सर्व्वपापैः प्रमुच्यते निंशद्दर्षं सहस्राणि स्वर्गलोकेमहीयते इति, मृगशीर्षं
शशधर इति फलविशेषाय न भैमतिथिघटकं द्वादश्यामित्येकादश्युप-
लक्षकं एकादशीं माघशुक्लैकादशी कृत्यतत्त्वार्णवे विष्णुरहस्यं। माघि
...तिपक्षे एकादश्युपवास...त्। द्वादशैकादशीभक्तत्यागस्य फल-

मुद्द्योगेन पराहृतंनस्तु। तथाच यतिधर्म्मे उशनाः, भिक्षागमनमनुद्द्योगात् प्राक् केनाप्यनिमन्त्रित। अयाचितन्तु तद्भैक्ष्यं भोक्तव्य मनुरब्रवीत्। याज्ञवल्क्यः, अयाचिताहृतग्राह्यमपि दुष्कृतकर्म्मणः। अन्यत्र कुलटाषण्डपतितेभ्यस्तथा द्विषः। एतेन तदानीमयाचितत्वेन दृष्टे स्थितमप्ययाचितमिति निरस्त। प्राजापत्ये परिसंख्यां व्यक्तीकरोति गोतमः, अथापरं त्र्यह न कथञ्चन याचेतेति। तथा प्रायश्चित्तविवेकक्रुद्भिरङ्गिरःप्रभृतिजातप्राणिवधे मनूक्तघृतप्राशनस्य प्रायश्चित्तरूपत्वात् शवानुगमननिमित्तकस्य शरीरशुद्धिहेतुरूपत्वाभावादन्नान्तरनिवृत्तिरवसीयतइति वदद्भिः सर्व्वंच प्रायश्चित्ते परिसंख्योक्ता। दुर्गसिंहोऽपि श्राद्धभोजीत्यस्य सति भोजनेऽश्राद्धमेवभुङ्क्ते नतुश्राद्धमित्यर्थः। नत्वश्राद्धंभुङ्क्तएवेति नियमस्तथात्वे यदाऽन्नाद्यभावादश्राद्धं न भुङ्क्ते तदा व्रतलोपःस्यात् यथा स्नानंमया कर्त्तव्यमेवेति नियमे सत्यस्नानात्व्रतभङ्ग इत्याह। अथ पारणनियमः। यद्यप्यत्र चान्द्रायणादिवत् परिसंख्यासम्भवस्तथापि पार तीर कर्म्मसमाप्ताविव्यस्माद्धातोरुत्पन्नः पारणशब्दोयद्यपि समाप्तिमात्रमभिधातुं समर्थस्तथाप्युपवाससमापकभोजनएव लोकशास्त्रयोः प्रयोगात् पङ्कजादिशब्दवत् प्रयोगाधीनयौगिकस्तस्मादुपवासव्रतस्य चरमाङ्गं भोजनमभिधत्ते पारणशब्दः। तथाच देवलः, उपवासेषु सर्व्वेषु पूर्व्वाह्णे पारणं भवेत्।

---

भत्। इत्यस्मादत इगणपठितपारधातोरुत्पन्न कर्त्तल्युटामिह प्रयोगाधीनयौगिकः सामान्यशब्दस्य विशेषपरतायाः सर्व्वसिद्धत्वेन निरुद्धलक्षणि-

अन्यथा तु फलस्यार्थं धर्म्ममेवोपसर्पति। धर्म्मीयमः। किञ्च यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधानं नोपपद्येत, तदाह सएव। सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथं। अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत्। पारणन्तु भवेत् कथमिति वर्षकृत्ये पाठः। नक्तं त्रयोदशीनक्तभोजनव्रतमिति। अवभक्षणस्याशितानशितत्वेन श्रुतावभिधानात्तदुभयव्रतसिद्धिः। यथा, आपोवै सर्व्वरसास्तासामशनेनाशितोऽनशितश्च भवतीति। एवञ्च, जलस्यापि नरश्रेष्ठ भोजनाङ्गे प्रजाहते। नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा, इति कालिकापुराणीयं रागप्राप्तपरं। अतएवादित्यपुराणे, पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनं। असमाप्ते व्रते पूर्व्वं नैव कुर्य्याद्व्रतान्तरं। इत्यत्र उपवासव्रते पारणनियमात् जलेन पारणं विधाय तद्दिने उपवासादिः कार्य्यः। अथ भैमी, विष्णुधर्म्मोत्तरे, मृगशीर्षे शशधरे माघे मासि प्रजापते। एकादश्यां सितपक्षे सोपवासो जितेन्द्रियः। द्वादश्यां षट्-

---

कोयोगकृठोवा। पारणस्य नियमिताङ्गत्वे प्रमाणमाह तथाचेति, सङ्कटे त्रयोदशीनक्तादिप्राप्तनिबन्धनसङ्कटे। एवञ्च व्रताङ्गजलपाने अनशितत्वेन च भेषजादृते भेषजरूपजलपानादिकं विना निवृत्तिरकरणं नावसीदतीति कृत्यतत्त्वार्णवे तिथितत्त्वेच सकृत्तुपट्तिलीभूत्वा सर्व्वपापै प्रमुच्यते त्रिंशद्वर्ष सहस्राणि स्वर्गलोकमहीयते इति, मृगशीर्षे शशधर इति फलविशेषाय न भौमतिथिघटकं द्वादश्यामित्येकादश्युपलक्षकं एकादशीं माघशुक्लैकादशी कृत्यतत्त्वार्णवे विष्णुरहस्यं। माघे मासि सितपक्षे एकादश्युपवासकृत्। द्वादश्यैकादशीभक्तत्यागस्य फल·

तिलाचारं कृत्वा पापात् प्रमुच्यते। तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी। तिलस्य दाता भोक्ता च षट्तिली नावसीदति। मत्स्यपुराणे, यदाष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुं। ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीं। उपोष्य विधिनानेन गच्छेद्विष्णोः परं पदं। भीमतिथिं, भैमीत्वेन ख्यातामेकादशीं। अथ पार्व्वतीमहोत्सवोक्तैकादश्युपवासः। आश्विनशुक्लपक्षमधिकृत्य कल्पतरौ ब्रह्मपुराणं, उपवासश्च कर्त्तव्य एकादश्यां प्रजागरः। द्वादश्यां वासुदेवश्च पूजितव्यश्च सर्व्वदा। अथ शयनादिकालः। भविष्यनारदीययोः। मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च। पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन। मैत्रमनुराधा, वैष्णवं श्रवणा, पौष्णं रेवती। भविष्ये, निशिस्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनं। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्। एवञ्च पादयोगप्राप्तौ कालातिशयः। तद्विधानं वामनपुराणे, एकादश्यां जगत्स्वामिशयनं परिकल्पयेत्। शेषाहिभोगपर्य्यङ्कं कृत्वा सम्पूज्य केशवं। अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः। लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत्। अनुज्ञां लब्ध्वेत्यन्वयः। एकादशीसमये दिवा

---

स्मृते। यद्यपि सामान्यत एव एकादश्युपवासस्य जागरणस्य द्वादश्यां हरिपूजनस्य च नित्यत्वमभिहितं तथाप्याश्विनशुक्लपक्षे विशेषाभिधानं प्रतिनिधिनिवारणाय इतिबोध्यं, वैष्णव्यमध्ये श्रवणमध्यपादद्वये

शयनीयपरिकल्पनं रात्रौ द्वादशीचक्रे निद्रेति। विष्णु-
धर्म्मोत्तरे, स्वास्तीर्णशयनं कृत्वा प्रीणयेद्योगशायिनं।
आषाढ़शुक्लद्वादश्यां विष्णुलोके महीयते। स्वास्तीर्ण-
शयनं शोभनास्तरणयुक्तखट्वादि। वराहपुराणेऽपि
श्रीभगवानुवाच, अन्यत्तु संप्रवक्ष्यामि कर्म्म संसार-
मोचनं। कदम्बः कुटजश्चैव धवकोऽर्जुनकस्तथा।
एभिरभ्यर्चनं कुर्य्याद्विधिदृष्टेन कर्म्मणा। ततः संस्था-
पनं कृत्वा मम मन्त्रविधिः स्मृतः। नमोनारायणेय,
कृत्वा इमं मन्त्रमुदीरयेत्। मेघान्यपि घनश्यामं उपा-
गतं सिच्यमानां महीमिमां निद्रां भगवान् प्रकातु
लोकनाथ वर्षास्विमं पश्यतु मेघवृन्दं। ज्ञात्वा च
पर्य्यंक च देवनाथ मासां श्चतुरो वैकुण्ठस्य तु पश्य नाथ।
आषाढ़शुक्लद्वादश्यां सर्वशालिधरं शिवं। य एतेन
विधानेन भूमि मे कर्म्म कारयेत्। स पुमान्न प्रणश्येत्,

संसारेषु युगे युगे। शयने कुटजविधानाद्विष्णुधर्मो-त्तरीयनिषेधोऽन्यत्र। धवकः कपित्थः। संस्थापनं शय्यायां। भूमि इति पृथिव्याः सम्बोधनं। एव-मुक्तेन मन्त्रेण कृत्वा सुप्वापयेत्ततः। सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदं। विबुद्धे त्वयि बुद्ध्येत जगत् सर्व्वं चराचरं। इति मन्त्रेण पूजयेत्। प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि। कटदानं भवे-द्विष्णोर्महापूजा प्रवर्त्तते कटदानं पार्श्वपरिवर्त्तः। कामरूपीयनिबन्धे। एवं संपूज्य विधिवद्भाद्रस्य द्वाद-शीदिने। मन्त्रेणानेन देवेशं पार्श्वेन परिवर्त्तयेत्। वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव। पार्श्वेन परि-वर्त्तस्व सुखं स्वपिहि माधव। त्वयि सुप्ते जगन्नाथे जगत् सुप्तं भवेदिदं। विबुद्धे त्वयि बुद्ध्येत जगदेत-च्चराचरं। ब्रह्मपुराणे, एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवं। प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः।

---

तिथ्यन्तरं पादयोगे यदभिहितं तस्य प्रमाणमाह किं तत्रैवाद्यपादेनेति दशम्या अंशोयत्नपादे तेन यः पादोदिवाप्राप्त स्तेन वा किमित्यर्थः। सचासौ मैत्राद्यपादश्चेति समासे दशम्यशेनइतत्रैव यत्पदाभावात् तेना-न्वये तत् पदार्थानन्वयात्। परन्तु तत् पदमव्ययं तुमवृतीयान्तं तथाच दशम्यंशेन मैत्राद्यपादेन योदिवा तेन मैत्राद्यपादेन यश्चप्रतिपदि तेनच मैत्राद्यपादेन जि इत्यर्थः, तथा दशम्यंशेन पौष्णशेषेण प्रतिपदि निशि यश्च तेन पौष्णशेषेण किमित्यर्थः। चशब्दस्यार्थं उभयत्र दशमी प्रति-पदोर्व्वर्जनादुभयत्रैव तिथिपञ्चकमनुमतमित्यस्य लाभः न च पौर्ण-मास्यां प्रतिपदि चतुर्द्दश्याञ्च कदाचिदपिपौष्णशेषसम्भवोनभवति एवं चतुर्द्दश्या न मैत्राद्यपादसम्भवइतिकथं दशमीप्रतिपदो वर्ज्जनं भ्रमात्ति

रात्रौ प्रसुप्तमित्यन्वयः बोधनन्तु दिवैव। वाराहे, कौमुदस्य तु मासस्य या सिता द्वादशी भवेत्। अर्थोदयन्तु मां तत्र तस्य पुण्यफलं शृणु। यावदोकारि दर्शनो यावत् त्वञ्चैव माधवि। सहस्रोजायते तावदन्यभक्तोगजायते। कौमुदस्य कार्त्तिकस्य। माधवीति पृथिव्याः सम्बोधनं। कृत्वा वै मम कर्माणि द्वादश्यां मत्परोनरः। ममैवबोधनार्थाय इम मन्त्रमुदीरयेत्। महेन्द्ररुद्रैरभिनूयमानो-भवानृषिर्व्वन्दितवन्दनीयः। प्राप्ता तवेयं किल कौमुद्याख्या जागृष्व जागृष्व च लोकनाथ। मेघागतानिर्मलपूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ। अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ। एवं कर्माणि कुर्व्वीरन् द्वादश्यां ये यशस्विनि। मन भक्तानरश्रेष्ठास्ते यान्ति परमां गतिं। अत्र मन्त्रद्वयपाठानन्तरं, उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते। त्वया चोत्थीयमानेन उत्थितं भुवनत्रयं, इति सम्प्रदायागतस्तृतीयश्लोकइति वाचस्पतिमिश्राः। शयनोत्थानमन्त्रास्तु मत्स्यतन्त्रप्रभृति ग्रन्थसंवादाल्लिखिताः। तदेवमेकादश्यां द्वादश्यां वा

योग्यस्य निषेधासम्भवात् तथापि दशमीप्रतिपदोर्वर्ज्जने न तात्पर्य्यं तिथिपक्षके तथासम्भवं विधौ तात्पर्य्यात्। अत्रेदमवधेयं द्वादशी चक्रपाणिन इति पद्मपुराणीयवचने विष्णुतिथित्वेन द्वादश्या शयना दिकमुक्तमिति द्वादश्यामेव शयनादिकं एकादश्यामुत्थानं ब्रह्मपुराणे यदुक्तं तदेकादशीयुक्तद्वादश्यभिप्रायेण। अतएव दिवा एकादशीसमये शय्यानिर्म्माणं रात्रौ द्वादशीचर्य्यं प्रस्थापनमुक्तं वराहपुराणे द्वादश्यामु त्थानस्योक्तत्वाच्च सर्व्वत्र मन्त्रपाठेऽपि द्वादश्याएव वरुणादपि तथा वाच्य यमस्मृतौ यदापादीपदनुक्तं तदेकादशीमारभ्य पौर्णमासीपर्य्यन्तं

रेवत्यन्तपादयोगवशाद्दिवोत्थानं नक्षत्रयोगाभावे तु द्वादश्यामेव कारयेदिति गुरुचरणाः। जीमूतवाहनस्तु भविष्ये। आभाकासितपक्षेषु मैत्रश्रवणरेवती। आदिमध्यावसानेषु प्रस्वापादावर्त्तबोधनं। आभाकासितपक्षेषु आषाढभाद्रकार्त्तिकशुक्लपक्षेषु एषाञ्च द्वादश्यां प्राप्तौ मुख्यः कल्पः। भविष्यपुराणं। निशि स्वापोदिवोत्थानं सन्ध्यायां परिवर्त्तनं। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्। विष्णुधर्म्मोत्तरे। विष्णुर्दिवा न स्वपिति नच रात्रौ प्रबुध्यते। द्वादश्यामृक्षसंयोगे पादयोगेन कारण। अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरेः। पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत्। वचनान्तरं, रेवत्यन्तोयदा रात्रौ द्वादश्या च समन्वित.। तदा विबुध्यते विष्णुर्दिनान्तं प्राप्य रेवतीं। दिनान्ते त्रिधाविभक्तदिनतृतीयभागे दिवोत्थानमित्यनुरोधात्। रात्रौ विबोधोविनिहन्ति पौरान्। स्वापोदिवा राष्ट्रकुलं न्टभर्त्तुः। सन्ध्याद्वये स्वल्पफला धरित्री भवेन्नराणामपि रोगदुःख। वराहपुराणे, द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे। आभा

निद्राप्रबोधनयो काल इति ज्ञापनार्थं तेन दिनपक्षपूजाभिधानमन्य ...पि सङ्गच्छति तत्रैकादश्यां शय्यानिर्म्माणकालं द्वादश्यां प्रस्वापन ...गुक्तमन्त्रस्य पाठस्तु तत्रैव त्रयोदश्यादिदिनत्रये सामान्यत पूजा ...र्म्मासोकालेन क्रमश निद्राग्रहण प्रबोधोऽपि तथति हरिलाधा ...धाय प्रभृतय। वस्तुतस्तु एकादश्यादिपञ्चतिथिषु निद्राप्रबोधकालत्व ...पि मुनि... द्वादश्यामेव शयनोत्थानविधानात् उत्थानस्य ...व निद्रितस्यायोगाच्चद मत न युक्तं परन्तु आषाढस्येयमाषाढी ...र्त्तिकस्येयं कार्त्तिकीति व्युत्पत्त्या आषाढीकार्त्तिकीयद द्वादशी

कासितपक्षेषु शयनावर्त्तनादिकं । तदेवं शयनादौ कालचतुष्टयं द्वादश्यां निशादौ नक्षत्रमात्रयोगः । तदभावे निशाद्यनादरेण तिथ्यन्तरे पादयोगः । तस्याप्यभावे द्वादश्यां सन्ध्यायां नक्षत्रमात्रयोगः । तस्याप्यभावे द्वादश्यां सन्ध्यायामेवेति, वोधनन्तु द्वादश्यां रात्रौ रेवत्यन्तपादयोगे दिनतृतीयभागे इति विशेषः । विष्णुधर्म्मोत्तरे, किं तन्मैत्राद्यपादेन दशम्यंशेन योदिवा । पौष्णशेषेण विन्तेन प्रतिपद्यथ योनिशि । इति दशमीप्रतिपदोर्निषेधादेकादश्यादिपौर्णमास्यन्तानां तिथीनामभ्यनुज्ञानं पद्मपुराणे, सर्व्वदेवशयनादिकमुक्तं यथा, प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः । श्रियादेव्या द्वितीया तु तिथीनामुत्तमा स्मृता । तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च । पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च । सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी स्मृता । मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा । एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः । चक्रपाणिन इति पणव्यवहारद्युत्यम्भाद्यातोः । त्रयोदशी त्वनङ्गस्य

---

परे न चैतादृशव्युत्पत्त्या प्रतिपदादिग्रहणसम्भवात् तन्मात्रपरत्व न सम्भवति विशेष्यवाचकपदासमभिव्याहृतापाढादिपदस्य पौर्णमास्यामेव प्रयोग साधुरिति वाच्य प्रागुक्तवचनैकवाक्यतया आपाढ्या सविशेदित्यत्र निद्रां त्यजति कार्त्तिक्यामित्यत्र द्वादश्यामेव, सन्ध्याकाले-द्वादश्यभावे निशाद्यादरेण द्वादश्यां शयनादिकं । किन्तन्मैत्राद्यपादेति वचने दशमीपदप्रतिपत्पदे द्वादशीभिन्नपरे मतान्तरेऽपि तयोर्यथाश्रुतार्थासङ्गतेः । तन्मते चतुर्दशीपौर्णमास्यो. मैत्राद्यपाद पौष्णशेषपादयोरसम्भवेन एकादश्यादिपञ्चकानुमतत्वासम्भवाच्चेति, मम प्रज्ञाप्य,